

# अद्वैततत्त्वप्रबोधिनी

## अमुद्रितप्रकरणग्रन्थसंग्रहः

प्रथमो भागः ।

# अद्वैततत्त्वप्रबोधिनी

[ अमुद्रितप्रकरणग्रन्थसंग्रहात्मकः ]

प्रथमोभागः ।

साधुशान्तिनाथेन संकलितः ।

अमलनेरस्थतत्त्वज्ञानमन्दिरात् प्रकाशितः ।

१९३२



Publisher
Indian Institute of Philosophy
Amalner



To be had
at:—( 1 ) The Institute of Philosophy
P. O:—Amalner ( E. Khandesh)

of ( 2 ) Sadhu Santinatha

( Present address ):—Mangal Bhaban
Panchavati
P. O:—Nasik

also Advaita Siddhanta (Hindi), Advaita Siddhanta (Bengali), Mayavada (Bengali) are sent by the author free of price and postage.

---

Printer:—R. G. Deokar at the
Sudarshan Electric Printing & Litho Works.
Sudershan Bhuvan, H. No. 523 Nasik-City.

# भूमिका

अयं वेदान्तनिर्णयः,—परमात्मा नित्यशुद्धबुद्धमुक्तसत्यस्वभावोपि सन्ननाद्यविद्याशक्तिं स्वां प्रकृतिं प्रलीनसर्वप्रपञ्चवासनालक्षणामनिर्वचनीयां स्वचैतन्यावेशेन साभासामुपचितामिवोपपाद्य तदन्तर्गत इव तत्सत्तास्फुरणरूपः शब्दादितन्मात्राकाराण्याकाशादीनि भूतानि क्रमेणोत्पाद्य जीवेनात्मना तेष्वनुप्रविश्य स्वयंसृष्टानि भूतानि सूक्ष्मतया व्यवहाराक्षमाणीति तेषां व्यवहारयोग्यस्थूलीभावाय तानि पञ्चीकृत्य तेभ्यः पञ्चीकृतेभ्यो भूतेभ्यो भूर्भुवस्वरिति त्रैलोक्यं देवादिभोगस्थानं ब्रह्माण्डं समष्टिरूपं तदन्तर्देवातिर्यङ्मनुष्यस्थावरादिभेदभिन्नं व्यष्टिपिण्डजातं चोत्पाद्य तेष्वनुप्रविश्य नामरूपाभ्यां व्यवहरन् संसारिणमात्मानमुपाध्यविवेकान्मन्यमानः सुखी दुःखी मूढः पण्डित इति च हर्षविषादाद्यनुभवन्नास्ते तावद्यावत्तत्त्वविदमाचार्यं प्राप्य वेदान्तमहावाक्यार्थमात्मतत्त्वं ब्रह्म साक्षान्न जानाति । तस्मिंस्तु विज्ञाते सति न सृष्टिर्न संसारो नवा कोपि व्यवहारो न भेदो नाभेदो न बन्धो न मोक्ष आसीदस्तिभविष्यतीति वा प्रतीतिपथमवलम्बते किन्तु पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते इति ।

उपरि तावत् तत्त्वस्वरूपं, तस्य मूलकारणत्वं, सृष्टिक्रमः, त्रैलोक्यदेवादिस्थानोत्पादनं, तत्त्वसाक्षात्कारस्तेन च मोक्षप्राप्तिश्चैतद्विषयकवेदान्तसिद्धान्ता उक्ताः । तत्र तत्त्वस्वरूपं, अविद्यासम्बन्धात्तस्य मूलकारणत्वं च यथाकथञ्चित् प्रतिपादितम् । द्वितीयादिभागेष्वनिर्वचनीयवादसिद्धान्तो विशेषतया प्रदर्शयिष्यते । अवशिष्टविषयाणां प्रतिपादने यत्नो न कृतो न वा करिष्ये यतस्तन्न विचारसहः प्रतिभाति । सृष्टिक्रमे परस्परविरुद्धविविधविचित्रा मतभेदा वेदान्तशास्त्रे ग्रथिता दृश्यन्ते। एतेन क्रमेणैव सृष्टि र्भवति नान्येन क्रमेणेति निर्णेतुं न पारयामः।

लोकान्तरं देवादिस्थानं चास्माकं प्रत्यक्षागोचरत्वादनुमानानिर्देश्यम् । विभिन्नसाम्प्रदायिकशास्त्रकारा अप्येतस्मिन् विप्रतिपन्ना उपलभ्यन्ते । मोक्षविषयकसिद्धान्तोपि स्वस्वसाम्प्रदायिकाग्रहमूलकः केवलमनोरथो न वस्तुगतिः, न वा विचारसह इति ग्रन्थकर्त्तु र्धारणा । एतदन्यत्र प्रकटीकरिष्यते । अतएवैतस्मिन्ग्रन्थे न तत्प्रतिपादनाय यत्नः कृतः किन्तु केवलतत्त्वप्रबोधिनी प्रक्रिया संगृहीता । युक्तिशूराणां श्रुतिमन्तरेणाप्यद्वैतं सुबोधमित्येतदग्रन्थपाठे सुविदितं भविष्यति ।

मूलतत्त्वस्वरूपे जिज्ञासा विवेकिना स्वाभाविकी दृश्यते । तदुपशमार्थमेव तत्त्वविषयकदार्शनिकविचाराः प्रारम्भणीयाः । दार्शनिका अकृत्रिमानुभवं यथावदङ्गीकृत्य चिन्तनसहायमात्रेण यथाशक्ति निर्दोषविचारे यत्नवन्तो भवन्ति । बुद्धिभेदेन दृष्टिभेदेन रुचिभेदेन वा विचारभेदो जायते । एतद्ग्रन्थे वैदान्तिकविचारपद्धतिमवलम्ब्य युक्तितर्कै र्वैदान्तिसम्मततत्त्वनिर्द्धारणे प्रयत्नः कृतः । विचारेण तत्त्वनिरूपणं मनुष्यमात्रस्य स्वाभाविकः सार्वजनीनपन्थाश्च । निरूपणं च साधकप्रदर्शनबाधकनिरसनाभ्यां सिध्यति ।

अत्र तत्त्वविषयकसिद्धान्तः संक्षेपतः प्रदर्श्यते, तत्प्रतिपादनरीतयश्च । परमार्थतः सच्चिदनन्तब्रह्मैकमेव तत्त्वम् । प्रमातृप्रमाणप्रमेयात्मकस्य विश्वस्य तस्मिन् कल्पितत्वेन ततः पृथगसत्त्वात्, स्वतो जडत्वेन तदधीनप्रकाशत्वाच्च । न खल्वेकं स्वप्रकाशं च तत्त्वमनपेक्ष्यानेकात्मकस्य विश्वस्य सिद्धिः साधयितुं शक्यते । द्वैतस्य चेदसत्त्वं तर्हि कुतः सत्त्वप्रतिभासः । अधिष्ठानसत्तयेति ब्रूमः । यथा शुक्तिसत्तया रजतसत्त्वप्रतिभासः । सा हि इदमि सितभास्वरवस्तुमात्रत्वेन ज्ञातापि स्वेन रूपेणाज्ञाता सती रजतानुभवसंस्कारवतः पुंसः स्वाविद्याविजृम्भितरजताभासात्मना भासते । एवमात्माप्यहमिति प्रकाशद्रव्यमात्रत्वेन

ज्ञायमानोऽपि सच्चिदनन्तात्मकेन स्वेन रूपेणाज्ञातः सन्नात्माविद्या-विजम्भितजगज्जीवेश्वरात्मकं भेदप्रपञ्चमात्मनि पश्यतीति। अस्मिन् पक्षे व्यवहारदशायां दृग् दृश्यश्चेति द्वौ पदार्थौ। तत्र दृश्यं माया, दृक् तदधिष्ठाता पुरुषः। माया च न सती, सत आत्मनोऽन्यत्वात्, शुक्तिरूप्यवत्मिथ्याभूतजगन्निदानत्वात्। नाप्यसती, विश्वनिदानत्वात्, मामहम् न जानामीत्यपरोक्षत्वाच्च। नापि सदसती, सत्त्वासत्त्वयोर-न्योन्यनिषेधरूपत्वेनैकाधिकरण्यासम्भवात्। परिशेषादनिर्वचनीयेत्या-यातम्। सा च नात्मनो भिन्ना, अनुपलब्धिप्रसङ्गात् अत्यन्तासत्त्वा-पत्तेश्च। नाप्यभिन्ना; जडाजडयोरैकात्म्यायोगात्। नापि भिन्नाभिन्ना, भेदाभेदयोः परस्परनिषेधात्मनोरविवादमेकत्र वर्त्तनानुपपत्तेः। न सावयवा, कार्यत्वापत्तेः। न निरवयवा, विश्वपरिणामित्वात्। न चोभ-यरूपा, विरोधात्। तस्मादविचारितरमणीया काचित् परमात्मनः शक्तिरेव माया। द्वैतप्रपञ्चः सर्वो मायामयः। आद्वितीयं ब्रह्मात्म-तत्त्वमेव परमार्थतोऽस्ति।

वेदान्तशास्त्रे चतुर्विधान्वयव्यतिरेकालोचनेनात्मतत्त्वमालोचनीयं दृश्यते। तत्र कार्यकारणान्वयव्यतिरेकाभ्यां तत्पदार्थतत्त्वमवधारणीयं। तद्यथा यत्कार्यं देहेन्द्रियविषयरूपं पृथिव्यादिमहाभूतरूपं वा किञ्चित्-प्रसिद्धं तत्सर्वं स्वस्वोपादानात् तत्त्वतो न पृथगस्ति पट इव तन्तुभ्यः। यद्वस्तु यत्स्वभावापेक्षसत्ताकं तत्तस्मान्न पृथक्। तथाचान्ततो गत्वा सदुपरागमन्तरेण कस्यापि वस्तुनोऽनुपलम्भात् सन्मात्रमेव सर्वस्य सत्वम्। यथा सत्यां मृदि घटो जातस्तिष्ठति लीयते च तथा सर्वमेव कार्यं सति नित्ये चिदात्मन्येव जायते तिष्ठति लीयते च तस्य सन्मात्रस्य कार्यगतसर्वावस्थासु व्यावर्त्तमानास्वप्यव्यावृत्तेः सतश्च निर्विकारतया परमार्थतः परिणामानुपपत्तेरन्यस्वभावस्य सतोन्यात्मनावभासोयं मृषा।

तस्मात् कारणत्वेनानुगम्यमानवस्तुव्यतिरेकेण कार्यस्यापरस्या-निरूपणात् सतश्च सर्वकार्याकारेष्वव्यभिचारेणानुगम्यमानत्वादध्यात्म-मधिभूतमधिदैवं वा न सन्मात्रादन्यदस्ति सच्च परमात्मा सत्यज्ञाना-नन्तरूप एव, इति सर्वप्रपञ्चाकारप्रविलापनेनाद्वैतेश्वरतत्त्वमवधार्यते ।

तथा त्वंपदार्थतत्त्वं च द्रष्टृदृश्यान्वयव्यतिरेकाभ्यां साक्षिसाक्ष्या-न्वयव्यतिरेकाभ्यामागमापायितदवध्यन्वयव्यतिरेकाभ्यां चावधारणीयम्। तद्यथा चक्षुषा रूपं दृश्यते तत्र चक्षुर्द्रष्टृ रूपं दृश्यम्। रूपेषु नीलपीतस्थूल-सूक्ष्माद्यवस्थाभेदैर्भिद्यमानेष्वपि तद्द्रष्टुश्चक्षुषो न भेदो विकारोन्यत्वं वा जायते। तथाच दृश्येभ्यो व्यावर्त्तमानेभ्यो द्रष्टृचक्षुरव्यावर्त्तमानं तेभ्योन्यदेकमेकरूपं चेति। तथा चक्षुषोप्यान्ध्यमान्द्यपटुत्वादिभिर्विक्रि-यमाणस्य दृश्यत्वात् तस्यापि मनोव्यापारावस्थायामेवोपलम्भात् तदभावे सुषुप्तावनुपलम्भात् सर्वेन्द्रियाणां व्यापारेष्ववस्थासु च व्यावर्त्तमानास्व-नुवर्त्तमानं मनो द्रष्टृ तस्येन्द्रियतदवस्थास्तद्व्याप्यविषयाश्चेत्येतत्सर्वं दृश्यमिति पर्यालोचनं द्रष्टृदृश्यान्वयव्यतिरेकौ। तथाच यत्किञ्चित् विषयजातं करणजातं वा प्रमीयते तत्सर्वं प्रमात्रैकेन व्याप्तमेव प्रमीयत इति प्रमातर्यन्वयिनि प्रमेयं सर्वं परस्परव्यभिचारि कल्पितमिति पर्या-लोचयेत्। एवं दृश्येभ्यो देहेन्द्रियविषयेभ्यो द्रष्टारं प्रमातारं पृथग्वि-विच्य साक्षिसाक्ष्यपर्यालोचनया प्रमातृभावमात्मनोन्तःकरणाध्यासकृतं विलापयेत्। तद्यथा यदान्तःकरणं स्वव्यापारस्थं जाग्रत्स्वप्नयोर्भवति तदैवात्मा प्रमातृत्वं भजते न सुषुप्तिसमाध्यवस्थयोः, तथाच प्रमातृत्वं व्यभिचारित्वात् साक्ष्यं, तद्यस्य सर्वावस्थानुस्यूतस्य साक्षादव्यवधानेनो-पलभ्यं स साक्षी प्रमातुरन्यः प्रमाता चान्तःकरणसम्वलिततया विकारपक्षपतितः कल्पितः। इत्येवं साक्ष्यादवस्थात्रयादन्तःकरणभावाभा-वाभ्यांकल्पितात्तत्साक्षितया सर्वावस्थास्वनुवर्त्तमानं स्वप्रकाशचिदात्मानं

पृथगुद्धरेत्। एवं साक्षिसाक्ष्यान्वयव्यतिरेकौ। ततः साक्ष्याणामवस्था-तदभिमानिविश्वतैजसप्राज्ञलक्षणानामागमापायित्वादागमापाययोश्चावधि-मन्तरेणासम्भवादन्योन्यावधित्वे चान्योन्याश्रयादन्यएवैषामागमापायि-नामवधिभूतो यस्मिन्नेते विकल्प्यन्ते सोऽकल्पितोऽविकृतः कूटस्थनित्यः स्वस्य स्वरूपे स्फुरणे चान्यानपेक्षः साक्षिभावादपि साक्ष्यानुगतप्रकाश-रूपात्परापेक्ष्याद्व्यावृत्तः स एवाहंवृत्त्या लक्ष्य आत्मेति विवेचनमा-गमापायितदवध्यन्वयव्यतिरेकौ।

अवस्थात्रयं चतुष्टयं वा यत्प्रसिद्धं तत्सर्वमागमापायित्वादवधिसापेक्षं, आगमापाययोः सर्वत्र सावधित्वनियमः। यः सर्वावस्थावधिः स सन्मात्रो नागमापायी प्रत्यगात्मा। तथा सर्वमेवावस्थातद्धर्मरूपं जगद्दृश्यं जडत्वात् घटादिवत् जडत्वं चागमापायित्वात्। दृश्यंच न द्रष्टुर्द्धर्मो रूपादिवत् तथाच सर्वस्योत्पत्तिविनाशद्रष्टा स्वयं नोत्पत्त्यादिमान् भवति स्वोत्-पत्त्यादेः स्वयं दर्शनानुपपत्तेः। द्रष्टृन्तरकल्पने ऽनवस्थापातात् ततः सर्वावस्थाद्रष्टा विश्वादिभ्योन्यो विश्वतैजसप्राज्ञापेक्षया तुरीय इत्युच्यते स एव निर्विकारतया सर्वावस्थावभासकत्वात् साक्षीत्युच्यते। तदेवं सर्वागमापायावधित्वेन सर्वद्रष्टृत्वेन सर्वसाक्षित्वेन च सर्वप्रकारप्रपञ्च-विलक्षणः प्रत्यगात्मा चित्सदनन्तरूपः।

नच कार्यकारणान्वयव्यतिरेकयोरागमापायितदवध्यन्वयव्यतिरेका-न्तर्भावस्तयोरर्थभेदादिति वाच्यम्। तयोरवान्तरभेदोपपत्तेः। कार्यत्वं कारणत्वं च वस्तुनोवस्थाभेदस्तत्र कार्यावस्थाव्यभिचारेपि कारणस्वरू-पस्य न व्यभिचार इत्येतावन्मात्रं सिद्ध्यति, न साक्षात्कूटस्थत्वं कारणस्य सिद्ध्यति। यतः सर्वकार्यानुस्यूतसन्मात्रमपि कथमपि विक्रियमाणं कारणशब्दाभिधेयं भवत्यतस्तद्भावादपि व्यावृत्तिसिद्धये सर्वविकल्पा-वधित्वेन तस्योद्धरणं कार्यम्; तथाच कार्यकारणभावस्य परस्परापेक्ष-

सिद्धिकस्य वस्तुस्वभावत्वासम्भवात् कल्पितत्वे सति तत्कल्पनाधिष्ठान-तयावधिभूतमकल्पितं शुद्धं वस्तूद्ध्रियत इति । तर्ह्यवधित्वस्याप्यागमा-पायापेक्षसिद्धिकत्वात् सापेक्षत्वे सति कल्पितत्वं स्यादिति चेत । नायं दोषः, तस्य कल्पितत्वेपि सर्वकल्पनानास्कन्दितस्वरूपस्याकल्पितत्वो-पपत्तेः । तस्मात् कार्यकारणदृश्यद्रष्टृसाक्षिसाक्ष्यागमापायितदवधीत्या-दिभिर्व्यवहारानुपातिभिरारोपितैर्धर्मैरात्मतत्त्वमावेद्यते । तस्मादेवमन्वय-व्यतिरेकाभ्यां व्यस्ताभ्यां समस्ताभ्यां वा सर्वस्मादनात्मनस्तद्धर्मेभ्य-श्चात्मनस्तदपोहेनैकस्वभावतया चित्सदनन्तब्रह्मरूपेणावधारणं भवति ।

वहुष्वमुद्रितग्रन्थेषु विप्रकीर्णयुक्तिराशीनामेकत्र संग्रहात्मकोऽयंग्रन्थो विरचितः । मुद्रितामुद्रितोभयविधग्रन्थावलम्वनेन ग्रन्थकर्त्रा टिप्पणी संयोजिता । अमुद्रितप्रकरणग्रन्थसंग्रहेऽयं प्रयासः सर्वतः प्रथमः । विभिन्नकाले विभिन्नग्रन्थागारस्थ ग्रन्थोऽवलोकितः, एककाले एक-ग्रन्थस्य एकाधिकसंख्या नोपलब्धा, परस्परमेलनेन संशोधने नावसरः प्राप्तः । अतो विज्ञपाठकैः संशोध्य पठनीयः ।

# उपकृतिस्मृतिः ।

अमलनेरस्थतत्त्वज्ञानमन्दिरे ऽध्ययनकाले लब्धवहुसहायस्य न्यायवेदान्ताध्यापकश्रीयुतात्मारामशास्त्रीण, एतत् पुस्तकमुद्रणे लब्धधनसहायस्य चोक्तसंस्था-प्रतिष्ठातुः श्रीयुतप्रतापश्रेष्ठिनो, मुद्रणकाले संशोधनकार्ये लब्धसहायस्य पञ्चवटी-वासिनः श्रीमत्‌शिवानन्दस्वामिनश्चा-धमर्ण्यप्रकाशनेन प्रकृतलेख उपसंह्रियते ।



# विषयसूची

## भूमिका

परमात्मा ऽविद्याशक्तिमासाद्य जीवजगद्भावेन प्रतिभासते; तत्त्वस्याज्ञानेन भुक्तिः तज्ज्ञानेन मुक्तिः-इति वेदान्तसिद्धान्तकथनम् ॥ मोक्षविषयकः सिद्धान्तो नानुभवसिद्धो न वा विचारसह इति ग्रन्थकर्तुर्निश्चयकथनम् ॥ मोक्षार्थं लोकान्तरप्राप्त्यर्थं वा न विचार आरम्भणीयः किन्तु विवेकिनां तत्त्वविषयकजिज्ञासोपशमार्थमेव॥ तत्त्वस्वरूपनिर्णयस्य बुद्ध्यधीनत्वाद् बुद्धिभेदात् सिद्धान्तभेदः स्वाभाविकः ॥ तत्त्वविषयकवेदान्तसिद्धान्तः प्रकटीकृतः;सर्वदृश्यप्रकाशकः स्वप्रकाशानन्तस्वरूपब्रह्मैव किञ्चिदुपाधि-(अविद्या) वशेन विवर्त्तितं सत् चेतनाचेतननानाविधपदार्थरूपेण प्रतीयते, तद्व्यतिरिक्तं नान्यत् किञ्चिद् वास्तवमस्तीति वेदान्तसिद्धान्तः ॥ चतुर्विधान्वयव्यतिरेकालोचनेन ब्रह्मात्मतत्त्वप्रतिपादनम् ॥ एतद्-ग्रन्थस्यापूर्वताकथनम् ॥ कृतज्ञताज्ञापनपुरःसरमुपसंहारः॥

## प्रथमोऽध्यायः—साक्षिविवेकः—

प्रदर्शनम् ५९–६२; अहंकारात्मनो निरुपाधिकाध्यासे शुक्तिरजतादिदृष्टान्तः ६२; उक्तदृष्टान्तस्थले ऽधिष्ठानात्मकेदमंशस्य न स्वरूपेणाध्यासः किन्तु संसृष्टरूपेण ६३; (आत्मानात्मनोः परस्पराध्यास आत्मा संसृष्टरूपेण अध्यस्तोऽपि न स्वरूपेणाध्यस्तो ऽतो न शून्यावशेषप्रसक्तिः)। स्वमते रजतं सदित्यनुभवे विरोधनिरसनपूर्वकं परमते विरोधप्रसञ्जनम् ६३-६४; परमार्थरजतखण्डनपुरःसरं रजतस्य मायामयत्व-[मिथ्यात्व] सिद्धिः ६५–६६; यथा शुक्त्यादौ तत्तदज्ञानविलसितं रजतादि मिथ्या तथात्मन्यपि प्रमातृत्वाद्यात्माविद्याविलसितं मिथ्येति कथनम् ६६; प्रमातृत्वादेरध्यासे पूर्वपक्षः, वहुविध शङ्काकरणम् ६७; तासां विस्तरश उत्तरप्रदानम् ६७-७७; अध्याससम्भावनानन्तरमध्यासे प्रमाणप्रदर्शनम् ७७–८५; कार्यत्वविक्रियावत्वपराधीनप्रकाशत्वहेतुभिरहंकारस्याऽनात्मत्वप्रतिपादनानन्तरं तस्य चिदात्मन्यध्यस्तत्वप्रदर्शनम् ७९–८०; चिदात्मनः प्रमातृत्वमाध्यासिकामिति प्रतिपादनार्थं संघातात्मनोः सम्वन्धविषयकविचारः ८१–८२; प्रमातृत्वादिव्यवहारा आत्मन्यविद्याध्यस्ता इति सिद्धान्तप्रदर्शनम् ८२–८४; प्रमाणप्रेरकत्वेन प्रमाश्रयत्वेन चाध्याससमर्थनम् ८४-८५ [टिप्पणी]; चिन्मात्रस्याविद्याश्रयत्वप्रतिपादनम् [क्रोडपत्रः] ८६–८८ ॥

## तृतीयाध्यायः –व्यवस्थाप्रदर्शनम् ।

अध्यायत्रयसंगतिप्रदर्शनं तृतीयाध्यायारम्भप्रयोजनकथनं च ८९ [टिप्पणी]; विषयानुभव [ विषयग्रहणस्य स्वरूपोत्पत्तिसहकारिभेद ] विषये [ज्ञानविषयव्यवस्थाविषये] सांख्यतार्किकप्राभाकरभाट्टचार्वाकवौद्धमतप्रदर्शनम् ८९–९०; सांख्यमतखण्डनं—[ स्व ( सांख्य )-मतविरुद्धताप्रतिपादनं, प्रमाणाभावत्वयुक्तिवाधितंत्वप्रदर्शनम्]९१-९२; तार्किकमतखण्डनं—[ एतन्मते ज्ञानार्थयोः साक्षात्सम्वन्धासम्भवो, व्यवधानतः सम्वन्धे ऽतिप्रसङ्गप्रसक्तिः] ९२—९४; प्राभाकरमतखण्डनम् [एतन्मते ज्ञानस्य देहावच्छिन्नात्मसमवेतत्वाद् वहिर्विषय-

## न्यायवैशेषिकमतखण्डनम्।



## शुद्धिपत्रम्।

| पृष्ठः | पंक्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| ३५ | १५ | ते | गुरुमते |
| ६० | २२ | प्रतिवधेपदिमा | प्रतिवन्धेपीदमा |
| ७१ | १७ | भ्रमधा | भ्रमधी |

# अद्वैततत्त्वप्रबोधिनी ।

## प्रथमः परिच्छेदः ।

### साक्षिविवेकः ।

( क ) अस्ति कश्चिच्चक्षुरादिव्यापारदशायामेव घटादिज्ञानदर्शनात् कादाचित्कज्ञानपरिणामी, स चाहंकारोऽहं घटं जानामीत्यनुभवात् । न च स आत्मा, स्वस्यैव स्वपरिणामद्रष्टृत्वे कर्त्तृकर्मविरोधात् ।

( ख ) धाराज्ञानविचारः—

( १ ) अस्ति तावत् घटादिज्ञानधारानन्तरमेतावन्तं कालं घटमनुभवन्नेवाहमासामित्यहंकारतत्परिणामानुसन्धानं। तच्च पूर्वानुभवजन्यं । न च ज्ञानधाराया अहंकारो ज्ञानं वा विषयो भवति, वेद्यज्ञानवादे तदयोगात् । नवा स्वाविषये ज्ञानं संस्कारमुत्पादयति। घटज्ञानधाराकाले तु अहमर्थतद्ज्ञानयोरपि काचिन्नान्या ज्ञानधाराऽस्ति । अतस्तत्राहंकारतद्धर्मसाक्षी तद्धर्मातिरिक्तः कश्चिदनुभवोऽस्तीति स एवात्मा । +

---

+ अयं भावः— घटज्ञानमहंकारो वा घटज्ञानधाराया विषयो न भवितुमर्हति । वेद्यज्ञानवादे ( ज्ञानस्य अस्वप्रकाशत्ववादे ) तन्न युक्तं । ज्ञानं वेद्यं भवतीति मते ( न्यायवैशेषिकमते ) घटज्ञानस्य विषयो घटज्ञानं न भवति ( अन्यथा प्राभाकरसम्मत स्वप्रकाशत्ववादापत्तिः)। वेद्यज्ञानवादे ऽहंकारोप्युक्त घटज्ञानधाराया विषयो न भवति, यतो ऽन्यविषयकं ( घटविषयकं ) ज्ञानं अन्याविषयकं ( अहंकारविषयकं ) न भवति । यद्विषयकं ज्ञानं जायते तद्-

( नैयायिकोपपत्तिप्रदर्शनंतत्खण्डनं च )

पूर्वपक्षी ( नैयायिकः )- अनुव्यवसायात् स्मृतिरुपपन्नो भवति ।

सिद्धान्ती:- मैवं । अनुव्यवसायस्य निरासिष्यमाणत्वात्, पश्यन्नेवाहमासमित्यनुभवविरोधः प्रतिसन्धानानुपपत्तेश्च । *

किंचात्र प्रष्टव्यः तत्तज्ज्ञानानन्तरमनुव्यवसायो धारानन्तरं वा । नाद्यः । विजातीयज्ञानेन व्यवधाने सति ध्यानादिरूप धाराया विलोप-प्रसंगः । + नचानुव्यवसायस्यापि घटविषयकतया न विजातीयतेति वाच्यम् । इच्छाघटित पदार्थस्यानुभवसामग्री सत्त्वे मानसज्ञानासंभव स्तत्कल्पने वा तत्सामग्रीप्रबलत्वात्तस्मिन् बाह्यज्ञानस्या-

विषयकमेव संस्कारमुत्पादयति । ज्ञानस्य यदविषयं तद्विषयकं संस्कारं ज्ञानं नोत्पादयितुं शक्नोति । अतोऽहंकारात्मवादे धारामध्यपतित तत्तद्विज्ञानानां तत्तत्कालीन त्मनश्च पूर्वकालीनानुभवागोचरत्वेनेदानीमनुसन्धानानुपपत्तेः । मानसस्य चाक्षुषस्य वा बाह्यविषयस्य धारावाहिकज्ञानस्य तत्कालीनाहमर्थस्य वानु-संधानं दृश्यत, एतच्च तत्तत्कालीनस्वसमानविषयानुभवमन्तरेणानुपपन्नः तदनु-भवश्च वेद्यज्ञानवादेऽनुपपन्नः, तस्मात् धाराकालीनः स्वतन्त्रोऽनुभव एष्टितव्यः।

* ज्ञानत्वनिर्विकल्पकानन्तरं व्यवसायनाशादनुव्यवसायस्य वर्त्तमानज्ञान-विषयत्वन्नस्यात् । किंचैवमनुव्यवसायधारा स्यात् । न च बाह्यसामग्री तत्प्रति-बन्धिका, घटसन्निकर्षे सत्यपि घटं जानामीत्यनुव्यवसायदर्शनात्, धारावाहिक-स्थले एकैकज्ञानस्यानुव्यवसायाभावे धाराप्रत्यक्षाभावप्रसंगाच्च। तस्मान्नानुव्य-वसायः प्रामाणिकः ।

( अन्नंभट्ट विरचित तत्त्वविवेकदीपनव्याख्या )

+ननु घटादिनिश्चयानन्तरं सत्यपि कोटिस्मरणादौ कदापि घटादाविव ज्ञानादिसंशयाद्यदर्शनेन तन्निश्चयावश्यकत्वे ज्ञानतदाश्रयातिरिक्त विषयज्ञानादेव धारा-

भावप्रसंगः × न द्वितीयः । विनष्टप्रथमादिज्ञानानाम-नुभवासंभवात् । +

पूः—चरमज्ञानस्य मनःसमवधानदशायां सामान्यलक्षणया प्राक्तनज्ञानानामनुभवो भवति । (स च तावत्ज्ञानगोचरो-ऽनुव्यवसायरूपो न तदनुसन्धानरूपः )

---

ऽविच्छेद इत्यतआह - " ध्यानेति " । विजातीयज्ञानाव्यवहित सजातीयज्ञान-धाराया एव ध्यानत्वादित्यर्थ ।

× बाह्यार्थानुभवसामग्र्या मानससामग्रीतो बलवत्वात् तत्सत्वेऽनुव्य-वसायो न संभवति। बाह्यार्थानुभवसामग्रीमात्रस्याप्रबलत्वेपीच्छाघटितसामग्र्याः सर्वतो बलवत्वाद् बुभुत्सितपदार्थादीनां दर्शनसामग्र्यन्तरसंभवः । बाह्यार्थधीसामग्र्यामपि मानसज्ञानकल्पने सर्वत्रानुव्यवसायधारायाऽविरामप्रसगः। चरमज्ञानानुव्यवसाये सति तत्सामग्रीप्राबल्येन तत्तदनुव्यवयायधारैव स्यान्न बाह्यार्थज्ञानं भवेत् ।

+ धारावाहिकज्ञानस्थले पूर्वपूर्वज्ञानकाल उत्तरोत्तरज्ञानस्य तत्पौर्वापर्यस्या विच्छेदकालस्यच सन्निधानं न विद्यते । उत्तरोत्तरकाले पूर्वस्य नाशो भवति, अतएवैकानुव्यवसायेन तेषामवगाहनं भवितुं नार्हति । यदि प्रत्येकमनुव्यवसायः कल्प्येत तथापि घटमात्रविषयकोक्तज्ञानधाराया विच्छेदप्राप्तिः स्यात् अथचायं घट अयं घट इत्येतादृशाऽविच्छिन्ना ज्ञानधारा ऽनुभूयते । एकैकानुव्यवसायज्ञानेन तत्तत् पौर्वापर्यस्याविच्छेदकालस्य चावगाहनं न संभवति यत एकानुव्यव-सायकाले द्वितीयानुव्यवसायज्ञानस्य विषयरूपो व्यवसायो न विद्यते । एकमेव संस्कारस्तत्सर्वगोचरो न भवति सुतरां न तत्सर्वगोचर एकस्मृतिसंभवः । प्रत्येक-गोचर संस्कारद्वारा एकस्मृतिर्जायत इत्युक्तेपि पौर्वापर्यस्याविच्छेदस्यच स्मृति र्न भवितुमर्हति यतः पौर्वापर्यविषयक एकसंस्कारो नास्ति । पौर्वापर्यसहित सर्व-विषयकस्मृतिं विना तेषामभिलापश्च न स्यात् । तादृक् प्रतिसधानं चानुभव - सिद्धं । मूलभूतानुभवाभावे स्मृतिर्न स्यात् । अननुभूते स्मृत्ययोगात्, मध्येचा

सि – इति न वाच्यं । सामान्यस्याप्यसन्निकृष्टस्याप्रत्यासत्ति-त्वात् । व्यवहितेपि घटानुभवे तावत्कालं घटमनुभवन्नेवाहमासमि-

---

नुव्यवसायाभ्युपगमे धाराविच्छेदापत्तेः, नान्यदवेदिषमिति स्मृतिबाधश्च । तस्मादनुव्यवसायासंभवात् धारान्तःपातिप्रथमादिज्ञानानां विनष्टानामनुव्यवसायायोगान्न कथमपि वेद्यज्ञानवादेऽभिहितानुसंधानं संगच्छते । अनुमेयं ज्ञानमिति वादे (भट्टमते) तु नतराम् । तन्मते पक्षाद्यनेकज्ञानव्यवधाने धाराविच्छेदादेः सत्वात् ।

एवं मध्येऽनुव्यवसायांगीकारे धाराविच्छेदो दूषणमुक्तम्, इदानीं मध्येऽनुव्यवसायकल्पने संख्यानुसन्धानानुपपत्तेर्न तत्कल्पनमित्युच्यते । केशवादिद्वादश नामसु नैरन्तर्य्येण पठ्यमानेषु तव मते आद्यवर्णस्थितिसमये तद्विषय कत्वादि-निर्विकल्पज्ञानं द्वितीयवर्णोत्पत्तिश्च । तत्सविकल्पसमये द्वितीयस्य स्थितिः । तदनुव्यवसायसमये द्वितीयस्य नाशः । तदनन्तरं द्वितीयग्रहणायोगात् तृतीयस्य चतुर्थस्य वा ग्रहो वक्तव्यः। एवमुत्तरत्रापि केषांचिद्वर्णानां तत्संख्यायावा ग्रहणा-योगात् मध्येऽनुव्यवसायकल्पने द्वादशनामश्रवणानुपपत्तिः तदकल्पने च अश्रौषमित्यनुसंधानानुपपत्तिः । नच मध्ये मध्येऽनुव्यवसायाभावेपि सर्ववर्ण-ज्ञानानुभवोऽनुमानात् सिध्यतीति वाच्यम् । अनुसन्धानात् पूर्वमनुमितिज्ञानमनु-पलब्धिपराहतं, पक्षाद्यनेकज्ञानकल्पने गौरवाच्च । अनन्तरं स्मरामीत्यनुभवाभावा-ल्लिंगज्ञानमपि नास्ति । नच परिशेषात् स्मृतित्वावधारणमिति वाच्यं । परिशे-षमजानतो हि प्रतिसंधानसत्वान् मैवम् । ज्ञातेपि स्मृतित्वे व्याप्तिनिश्चयस्यानियत-त्वान्न नियमेनानुमितिः ।

त्यनुसन्धानदर्शनात् । * सामान्यलक्षणयापि समयविशेषावच्छिन्न ज्ञानमात्रस्यानुभवो न युक्तः । नच ज्ञानत्वरूपेणोपस्थितज्ञाने तत्समयावच्छिन्नार्थान्तरस्यास्मृत्यादिना समयविशेषावच्छिन्नत्वानुमितिर्भवत्यतस्तद्व्यवहार उपपद्यत इति वाच्यं । विजातीयज्ञानव्यवधानानन्तरमपि प्रातःकालादारभ्याप्रहरं इदमपश्यम् इत्यादि प्रतिसंधानं नोपपद्यते । अत्रार्थान्तरस्मृतिसंभवेन तदस्मरणात्मकलिंगस्याभावात् तत्समयावच्छिन्नत्वस्य दुर्ग्रहः । प्रमाणाभावात् सामान्यप्रत्यासत्तिरेवासिद्धा ( क्रोडपत्रो द्रष्टव्यः )

अतएवाहंकारधर्मातिरिक्तज्ञानं विना धारास्मृति र्न संभवति ।

शंकाः— अनुभवन्नेवाहमासमिति नानुसन्धानं किंत्वनुभव एवेति नाहंकारधर्मातिरिक्तं ज्ञानं सिध्यति ।

---

* ज्ञानधारायां नष्टायां घटिकादिकालविगमेपि ( घटिकादि व्यवधानेपि । धारागत व्यक्तेरेकस्याप्यसत्वे ) एतावन्तंकालं पश्यन्नेवासामित्येतादृश ज्ञानस्योपलब्धेरेतद्ज्ञानं सामान्यलक्षणाजन्यानुभवरूपं न, यतः सामान्यलक्षणास्थले सामान्याश्रितस्य कस्यचिदपि व्यक्तेः सत्वमावश्यकं । न चात्र तदस्ति । अतएवोक्तज्ञानं नानुभवरूपं । नच स्मरणानुव्यवसाय एव तदाश्रयो ऽस्तीति वाच्यम् ( = समयान्तरे घटस्मरणे सति तदनुव्यवसायो जायते । तत्र घटानुभवत्वस्य सत्त्वात् तत्प्रत्यासत्त्या धारानुभव इत्यर्थः ) । अद्राक्षमित्यादौ तदभावात् अद्राक्षमिति स्मरणानुव्यवसाये चाक्षुषत्वाभावात् धारागत चाक्षुषत्वानुसंधानं न स्यादित्यर्थः । उक्तानुव्यवसायः स्मरणस्य मानसप्रत्यक्षरूपो ऽतश्चाक्षुषत्वरूप सामान्यप्रत्यासत्तिरुक्तानुव्यवसाये न विद्यते । अतएव ततश्चाक्षुषज्ञानधाराया ऽनुसन्धानन्नस्यात् । किंच धाराकालीन ज्ञानानां तदानी ( चरमज्ञानानन्तर )— मसत्वात् तेषामनुव्यवसायो न स्यात् । असन्निकृष्टानुव्यवसायायोगात् ।

समाधानः— न तावदयं प्रत्यक्षानुभवः, धाराचरमज्ञानानन्तरमसतां पूर्वज्ञानानां तावत्कालीनात्मनश्चानुभवितुमशक्यत्वात्। नाप्यनुमितिः। अनुमानेपि किं व्यवहारो लिंगं स्मृतिर्वा ? आद्यकल्पेपि किं धाराकालीनव्यवहारो लिंगं तदनन्तरकालीन व्यवहारो वा। नाद्यः। विनष्टज्ञानैः समयान्तरे व्यवहारासम्भवेन ततस्तदनुमानायोगात्। न द्वितीयः। व्यवहारमात्रस्य धारालिंगत्वाभावात्।

नापि तावत्समयावच्छिन्नार्थस्मृतिमात्रेण तन्मूलानुभवमनुमिनुयात् यतो ऽर्थस्मृत्या ज्ञानस्यानुमानं नोपपद्यते। मध्ये स्मरामीत्यनुभवाभावेपि तदनुसन्धानदर्शनात्। व्याप्यविशेषपरिज्ञानं विना ऽनुमानासंभवात्। + स्मरणस्य पूर्वानुभवजन्यत्वाज्ञानसंशयाभावनिश्चयदशायामपि वर्णितानुसन्धानदर्शनेन स्मरणेन तदनुमानायोगाच्च। तदा तदनुसंधानं नेत्यभिधाने च लिंगानुसन्धानं विनाहंकारोपि नानुभूयत इति वक्तुं शक्यतया तत्सत्पक्षत्वमपि न सिध्येत्। न चोपायान्तरं तदनुभवे ऽस्ति। ×

---

+ व्याप्यतावच्छेदकप्रकारेण व्याप्यज्ञानमेवानुमितिजनकं भवत्यन्यथा प्रमेयत्वरूपेण धूमज्ञानेपि वन्ह्यनुमितिप्रसंगः। स्मृत्यां स्मृतित्वमेव ज्ञानव्याप्यतावच्छेदकं। तत्पुर्वं च नियमेन तत्प्रकारकं ज्ञानमस्तीति न, अतएव तत्ताह्लिंगजन्यं न ज्ञानं। सुतरां न स्मृतिरूपहेतुजन्य धाराज्ञानस्यानुमितिर्भवति। अतएव यदस्मरणलिंगेनार्थान्तराननुभवो ऽनुमानपुरःसरं धारानुमानं स्यादिति परास्तं।

× नच तावत्कालीन तादितराज्ञानमेव तद्धारायां प्रमाणमिति वाच्यम्। इतरज्ञानसामग्रीविरहादेवेतराज्ञानसिद्धेर्धाराप्रातिवन्धकत्वे मानाभावात्। नच

तथाच स्मृतेर्भिन्नं धारारूपज्ञाने प्रमाणं न वक्तुं शक्यते । अतो जन्यज्ञानस्य वेद्यत्ववादे धारानुभवार्थमहंकारतद्धर्मातिरिक्तं ज्ञानमभ्युपगन्तव्यं । *

( प्राभाकरमतखण्डनं )

पूर्वपक्षी ( प्राभाकरः ) – अहंकारधर्मज्ञानस्य स्वप्रकाशत्वमस्तु ( अहमर्थसमवेतज्ञानस्य ज्ञातृज्ञानज्ञेयप्रकाशात्मकत्वाद् धाराद्यनुसन्धानोपपत्तिः )

---

धाराहेतुभूत बुभुत्साप्रतिबन्धादेवेतरज्ञानाभाव इति वाच्यम् । अनेकज्ञानसामग्रीकालीनाया एवान्यतमबुभुत्सायास्तथात्वेन तादितरज्ञानसामग्रीविरहदशायां प्रतिबन्धकत्वासिद्धेः ।

शंकाः– तावत्कालीनं ज्ञानमेकमस्तु तथाच प्रत्यक्षानुव्यवसायात्मकमेवानुसंधानं ।

उत्तर– यन्मते जन्यज्ञानमन्तःकरणपरिणाम स्तन्मते तस्य विरोधिपरिणामनाश्यतया यावद्विरोधिपरिणाममवस्थानसंभवेनोक्तरीतिसंभवेऽपि तवमते ( नैयायिकमत, एतन्मत ईश्वरज्ञानं नित्यं स्वप्रकाशञ्च इतरत्तु तृतीयक्षणवर्तिध्वंसप्रतियोगी वेद्यञ्च ) ज्ञानधारैव वाच्या तथाच नित्यज्ञानानभ्युपगमे नोक्तदोषनिस्तारः ।

* धाराज्ञानगोचर प्रतिसन्धानं न स्मृतिव्यतिरिक्तं यतोऽनुभवस्योक्तरीत्याऽसंभवात् किन्तु स्मृतिरेव, तच्चातिरिक्तनित्यानुभवमन्तरेण न संभवति । सामान्यलक्षणाप्रत्यासत्तिखण्डनान्नाहंकारधर्मातिरिक्तज्ञानं विना धारास्मृतिः संभवति

धारावाहिकज्ञानविचारोऽनुव्यवसायखण्डनं च नृसिंहाश्रमविरचित अद्वैतदीपिकायां (मुद्रितग्रन्थे) अतीव विस्तारः कृतः।

सिद्धान्ती:- इति न वाच्यं । जन्यज्ञानस्वप्रकाशत्वस्य निरसिष्यमाणत्वात् । तन्मतेप्येतावन्तं कालं नेतःपरमद्राक्षमिति घटेतराज्ञानानुसंधानायोगाच्च । नच तदानीन्तन घटज्ञानधारयैव तदितरगोचराज्ञानानुभव एवायमिति वाच्यं।नाद्राक्षमिति स्मृतित्वानुभवविरोधात् । घटाद्यनुपस्थितिदशायामप्युक्तानुभवदर्शनाच्च । घटादिज्ञानात्तदाश्रयस्यापि सिद्धिरिति प्राभाकरमतमपि न संगतं । ज्ञानस्य स्वस्मादन्यस्मिन् विषय एव संशयादिनिवर्त्तकत्वात् । ज्ञानं हि यद्गोचरसंशयादिनिवृत्तिस्वभावं तद्गोचरामेव स्मृतिमुत्पादयति, संशयं च स्वान्यास्मिन् स्वविषयविषयकमेव निवर्त्तयतीति न घटादिज्ञानादात्मस्मृतिः । ( जन्यज्ञानस्य विषयत्वानुभवात् स्वविषयत्वस्य चासंभवान्न तस्य स्वप्रकाशत्वमिति नित्यसाक्ष्यभावे धारानुसंधानानुपपत्तिः ) ।

ततश्चाहंकारतद्वृत्तितदभावानां साक्ष्यनुभव एकोऽहंकारधर्मातिरिक्त एष्टव्यः । + स च वक्ष्यमाणविधया ऽत्मेति स एवाहंकारतत्परिणामद्रष्टा ।

( २ ) स्मृतिहेतुज्ञानस्याहंकारधर्मातिरेके ज्ञानस्यान्यधर्मत्वानुपपत्तेस्तन्नित्यं सिध्यति ।

शंका:- नित्यानुभवनाशाभावात् कथं संस्कारोदयः ।

---

+ धाराकालीनाहंकारादिस्मृत्यनुपपत्त्या तेषां नित्यसाक्षिरूपानुभवः सिध्यति । उत्पन्नानां ज्ञानादीनामनावृतसाक्षितादात्म्येनैवोत्पन्नतया सन्ततावभासोपपत्तेः । एवं सत्येवैतावन्तं कालं ध्यायन्नेवासामित्यनुसन्धानं च संगच्छते । न च नित्यबोधमन्तरेण पूर्वापरबुद्धीनामनुसन्धानासिद्धिः ।

उत्तरः– ( क ) तद्विषयीभूत तत्तद् ज्ञाननाशात्तदुपपत्तेः। ( अद्वैत-मुक्ताकान्तिः )

( ख ) धारातदाश्रयाहमाकारवृत्तेस्तदानीमुत्पत्त्या ततस्तद्गोचर संस्कारोपपत्तेः । न च ज्ञानद्वयस्यैकदा विरोधोऽन्तःकरणाविद्यावृत्त्यो-र्भिन्नोपादानतया तदभावात् । ( अद्वैतरत्नकोशः )

( ग ) तस्मात् साक्षिचैतन्यस्यानावृतत्वादावरणाभिभवार्थं वृत्तिमनपेक्ष्यैवाहंकारादिप्रकाशनं । ननु भवत्वेवं तथापि कथमहंकारादीनामनुसन्धानमिति चेदुच्यते । सुषुप्ताविवाविद्याद्यनुसंधानसिद्धये कल्पितामविद्यावृत्तिमहमाकारामंगीकृत्याहमर्थे संस्कारसम्भवादत्राप्यनुसंधानं संभवति । नचास्मिन्पक्ष एतावन्तं कालमिदमहंपश्यन्नेवासमित्यन्यज्ञानधाराकालीनानुसन्धानानुपपत्तिः । अवच्छेदकभेदेन सुखदुःखयौगपद्यवद् वृत्तिद्वययौगपद्यस्याप्यविरोधेनान्यज्ञानधाराकालेप्यहमाकाराविद्यावृत्तिसंभानसंभवादिति । यद्वाऽहमाकारावृत्तिरन्तःकरणवृत्तिरेव किन्तु उपासनादिवृत्तिवन्न ज्ञानम्, अक्लृप्तकरणजन्यत्वात् । नहि तत्र चक्षुरादिप्रत्यक्षं करणं संभवति । नवा लिंगादिकं, लिंगादिप्रतिसन्धान-शून्यस्याप्यनुसंधानदर्शनात् । नापि मनः करणं, तस्योपादानभूतस्य क्वचिदपि करणत्वाक्लृप्तेः । तर्ह्यहमर्थप्रत्यभिज्ञानं न स्यादिति चेन्न तस्याऽहमंशे ज्ञानत्वाभावेपि तत्तांशे स्मृतिकरणत्वेन क्लृप्तसंस्कारजन्यतया ज्ञानत्वादंशभेदेन ज्ञाने परोक्षत्वापरोक्षत्ववत् प्रमात्वाप्रमात्ववच्च ज्ञानत्वयोरप्याविरोधादिति । ( स्वरूपनिर्णयः )

———

# क्रोडपत्रं

## सामान्यलक्षणाखण्डनं ।

न तु सामान्यं प्रत्यासत्तिरक्लृप्तत्वात् । न च पक्षवृत्तिधूमे व्याप्त्य-ग्रहात् परामर्शाभावेनानुमानमपि न स्यादिति वाच्यं । व्याप्यतावच्छेदकप्रकारकज्ञानस्यैवानुमितिहेतुत्वांगीकारात् । अतएव तदकल्पने पक्षीयसाध्यज्ञानाभावेन विशेषणज्ञानाभावान्नानुमितिरिति परास्तं । विशिष्टवैशिष्ट्यावगाहिज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्यैव हेतुत्वमिति परसिद्धान्तात् ।

नन्वेवमप्यनागतधूमज्ञानार्थं तदनभ्युपगमेप्यनागतगोचरप्रत्यासत्त्यर्थं सामान्यप्रत्यासत्तिस्वीकार आवश्यकः, संशयेप्यनागतविशेष्यके प्रत्यासत्तिजन्यत्वस्य स्वीकरणीयत्वादिति चेत् ।

न । संशयस्य मानसत्वेनाप्युपपत्तेः प्रत्यासत्त्यंतराकल्पनादतीन्द्रियसंशयवच्चक्षुराद्यनुविधानस्य सहचारादि साधारणदर्शनोपक्षीणत्वादन्यत्र वाधकाभावेन चाक्षुषत्वात् ।

किंच यदि सामान्यप्रत्यासत्त्या प्रसिद्धाप्रसिद्धसकलधूमोपस्थितावेवाप्रसिद्धधूमे विशेषादर्शने धूमो वन्हिव्याप्यो न वेत्याकारः संशयस्तदा यदिन्धनप्रभवो ऽप्रसिद्धो वस्तुतो नास्त्येव प्रसिद्धेच तत्प्रभवे वन्हिसंवन्ध एवावगतस्तादिंधनप्रभव धूमगोचर एतदिन्धनप्रभवो धूमो वन्हिव्यभिचारी न वेत्याकारः संशयो न स्यात् प्रसिद्धे तत्र विशेषदर्शनादप्रसिद्धस्य च तस्यासत्वात्, तदिन्धनप्रभवधूमत्वरूप-

सामान्यप्रत्यसत्त्याप्यनुपस्थितेः। न चासावसिद्ध एव। अनुकूलतर्कादिविरहदशायां धूमो वन्हिव्यभिचारी न वेति संशयवत्तस्यापि सर्वानुभवसिद्धत्वात्। अथ कथंचित् तत्रैव तदिन्धनप्रभवधूमत्वं वन्हिव्यभिचारिवृत्तिर्नवेत्यादि संशयाहितस्तादृशः संशयोऽस्तु किं तदर्थं सामान्यप्रत्यासत्त्या। किंचायं हि संशयो धूमे वन्हिजन्यत्वमात्रं न विषयीकरोति, धूमो वन्हिजन्यो न वेति संशयादर्शनात् किन्तु तद्व्याप्यत्वं तच्च धूमे धूमत्वावच्छिन्न वन्हिजन्यताकत्वं तच्च प्रसिद्धधूमेप्यज्ञातमिति न संशयानुपपत्तिरिति न सामान्यं प्रत्यासत्तिः।

नापि ज्ञानेच्छाकृतीनां समानविषयत्वादनागतपाकादेः कृतिसाध्यत्वज्ञानाय तदपेक्षा। तथाविध ज्ञानस्यापि प्रवर्त्तकत्वे रजतत्वेन गृह्यमाणे कस्मिंश्चित् तत्त्वेनागृह्यमाणेपि रजते सान्निकृष्टे प्रवृत्त्यादि प्रसंगात्। पाकत्वमनागतवृत्ति, अनित्यवृत्तिनित्यधर्मत्वात् घटत्वादिवदित्यनुमानादिदानीमनागतज्ञानसंभवात्। दृष्टान्तेचानागतवृत्तित्वमाप्तवचनादिना सिद्ध्यति। भविष्यत्कालः पाकाधारः व्यवहारकालत्वादिति वा साध्यं। भविष्यदादिज्ञानं च तवाप्यन्यत एव। व्याप्तिज्ञानं चानुमितिसमानाकारमेव तज्जनकं न तु सामानविषयमिति न तदर्थमपि तदपेक्षा।

पूर्वपक्षीः—ज्ञानेच्छाप्रयत्नानां कार्यकारणत्वग्रहाय सामान्यं प्रत्यासत्तिः। तथाहि। कदाचिदिष्टसाधनत्वेन ज्ञाने जाते कुतश्चिद्धेतोरनुत्पन्नायां चिकीर्षायां तदनुव्यवसायः सकलेष्टसाधनज्ञानगोचरो जायते। एवं समयान्तरे प्रतिबन्धादनुत्पादितप्रयत्नेच्छायां तदनुव्यवसायः ततः स्मृत्युपनीतयोः कार्यकारणभावग्रहः, अन्यथेच्छा-

नन्तरं विनष्टज्ञानानुव्यवसायासंभवान्न तयोः कार्यकारणताग्रहः। एवं कृतिचिकीर्षयोरपि।

सिद्धान्तीः—मैवं। कार्यकारणभावग्रहे हि धुमाग्न्योरिव समानप्रकारकज्ञानमुपयुज्यते नतु समानविषयत्वमपि, गौरवात्, प्रमाणाभावाच्च। किंच तयापि कथं कार्यकारणताग्रहो, युगपत् स्मृत्युपनीतियोः पूर्वापरभावग्रहासंभवात्। न च स्मृतिः क्रमेणैव भवतीति नियमः, व्युत्क्रमेणापि तद्दर्शनात्। किंच सामान्यमप्यनागतव्यक्त्या ऽसंवद्धं कथं तदुपस्थापयेत्, प्रत्यासत्ति हिं प्रत्याय्याश्रितैव ज्ञानं जनयेत्। नहि भविष्यत्सम्बन्धोप्युत्पद्यमानज्ञान उपयुज्यते। समवायस्तु स्वरूपेण वर्त्तमानोप्यकिञ्चित्करो ऽन्यथा घटत्वेन पटादेरप्युपस्थितिप्रसंग इति न सामान्यं प्रत्यासत्तिः।

न वा अन्धकारप्रतीत्यर्थं सामान्यं प्रत्यासत्तिः, प्रौढप्रकाशक यावत्तेजोज्ञानं विना तदभावज्ञानासंभवादिति वाच्यम्। अन्धकारस्य रूपवत्वादिना द्रव्यरूपस्यालोकाभावज्ञानानपेक्षत्वेन यावदालोकज्ञानस्यानपेक्षणात्। किंच तत्रापि नात्यन्ताभावज्ञानार्थं निखिलतेजोज्ञानापेक्षा, यत्किंचित् प्रतियोगिज्ञानेपि तज्ज्ञानसंभवात् यावत्प्रतियोगिज्ञानस्य गौरवेणाकारणत्वात्। प्रागभावादेस्तु सामान्यरूपो नास्त्येव। तत्तद्विशेषस्तु तत्तत्प्रतियोगिमात्रवृत्तिविशेषनिरूप्य इति किं सामान्यलक्षणयेत्यलं। [ नृसिंहाश्रमप्रणीत तत्त्वविवेकदीपनं ]

**टीका**:—महानसीयधूमादौ वन्हिसम्बन्धनिश्चयेपि धूमो वन्हिव्याप्यो न वेति जायमानसंशयो न प्रसिद्धधूमविषय स्तत्र तत्सम्बन्धनिश्चयात् किन्त्वप्रसिद्धधूमविषयस्तेन च चक्षुस्सन्निकर्षांतराभावात्

सामान्यं सन्निकर्षः कल्प्य इति संशयान्यथानुपपत्तिः प्रमाणमुपन्यस्तं तन्नयुक्तमित्यर्थः । [व्यभिचारशंकानिवर्त्तकतर्कावतारे तत्संभव इत्यत उक्तं तर्कानुदयं इति । तद्ज्ञानस्य चेति । धर्मिज्ञानस्यापि पृथक्-संशयहेतुत्वादुपन्यस्तं पूर्वमिति ] ? वन्हिसामानाधिकरण्यमात्रनिश्चयेपि तद्व्याप्यत्वानिश्चयादित्यर्थः । समानविषयनिश्चयस्य च तन्निवर्त्तक-त्वादिति भावः । वन्हिजन्यत्वेति वन्हिसामानाधिकरण्यमात्रमित्यर्थः । यथाश्रुते नियमगर्भजन्यत्वसंशयस्यापि व्याप्यत्वसंशयतुल्यत्वेनासांग-त्यादिति ।

अनागतपाकादौ चिकीर्षातद्गोचरज्ञानसाध्या, घटज्ञानात् पटेच्छा-विरहेण समानविषयत्वेन ज्ञानेच्छाकृतीनां हेतुहेतुमद्भावावधारणा-दनागतपाकज्ञानं च न विधान्तरणेति तदर्थं पाकत्वप्रत्यासत्तिरे-षितव्येति पक्षं दूषयति—' नापीति ' [ तथाविधे विज्ञातं सामान्यं प्रत्यासत्तिरिति क्वचिद् रजतत्वग्रहणमुक्तम् । तत्वेनागृह्यमाणे विशेष्यत्वे-नाज्ञायमाने देशान्तरस्थे देशविशेषे वैशिष्ट्याज्ञानान्नप्रवृत्तिरिदंता-ज्ञानस्यापि तद्धेतुत्वादित्यत उक्तं ' सन्निकृष्ट ' इति । क्वचिद्रजत-त्वोपस्थित्यनन्तरं तत्प्रत्यासत्त्या सन्निकृष्टरजतगोचरज्ञानस्यावृतत्वा-त्ततस्तत्र प्रवृत्तिः स्यादित्यर्थः । अतिप्रसंगेनालौकिकज्ञानस्याप्रवर्त्तक-त्वान्नतदनुरोधेन तत्प्रत्यासत्तिरिति भावः ] ? नन्विदंतावगाहीष्टताव-च्छेदकप्रकारकज्ञानं प्रवर्त्तकं रजतत्वसामान्यासत्तिज्ञानस्य सन्निकृष्टे-दन्तानवगाहित्वान्नायंप्रसंगः । नचैवं पाकत्वेनानागतपाकज्ञानमपि न हेतुःस्यादिति वाच्यं । चिकीर्षाया अनागतविषयत्वनियमादनागतेदं-तावगाहिज्ञानस्यचासंभवेन सामान्याकारज्ञानस्यैव चिकीर्षाहेतुत्वात्

प्रवृत्तिविषयगोचर प्रत्ययार्थे तूक्तरूपेणैव तथैवान्वयादिदर्शनादित्यनु-शयादाह—" पाकत्वं " इति । अनागतत्वं वर्त्तमानप्रागभावप्रति-योगित्वं तद्वृत्तित्वं च नात्मत्वादाविति तत्र व्यभिचारवारणाय " अनित्यवृत्तिरिति " विशेषणं । एतद्घटत्वादिव्यावृत्तये " नित्यध-र्मत्वादितिच " । अनागतपाके ज्ञाते सति तस्य पाकत्वेनरूपेणेष्टसा-धनताज्ञानात् तत्चिकीर्षादीति भावः । " आप्तवचनादिना " इत्यादि पदेन प्रत्यक्षग्रहः, कुलालव्यापारदशायां प्रत्यक्षेणानुमानेन वा घटो भविष्यतीति घटत्वादावनागतवृत्तित्वग्रहणात् । ननु पाकत्वमेक-फलावच्छिन्न क्रियाक्षणनिचयवृत्तिसमाहारात्मकोपाधिधर्मस्तस्य च नित्यत्वमसिद्धं । नचानेकवृत्तित्वं नित्यशब्दार्थः युगपदुत्पन्न तावत् घटत्वादौ व्यभिचारादित्यपरितोषादाह—" भविष्यदिति " । प्रलये व्यभिचारवारणाय हेतौ व्यवहारेति विशेषणं । पक्षासिद्धिमाशंक्याह-" भविष्यदिति " । कालोपाधित्व सामान्यासत्त्या तेन रूपेण भवि-ष्यत्कालोपाधेरुपस्थितावपि भविष्यत्वेन तदुपस्थितीत्यर्थः । प्रमाणान्तरं त्वयापि वाच्यं तच्चायं कालोपाधिः कालोपाध्यन्तरपूर्वः कालोपाधित्वात् संप्रतिपन्नवदित्यनुमानं व्यवहारप्रलयकालपरिमाणनिरूपक ज्योतिराग-मोवेति मतद्वयेपि तुल्यमितिभावः । वस्तुतस्तु ज्ञानेच्छादीनां समान-प्रकारत्वेन हेतुता नतु समानविषयत्वेनापि गौरवात् । नच घटत्वेन पटेच्छापत्तेः समानविषयत्वमावश्यकमिति वाच्यम् । इच्छायाः प्रकाराश्रयाविषयस्वभावतया तदनुपपत्तेः । अस्मन्मते ऽनिर्वचनीय-ख्यात्यभ्युपगमेन शुक्तिरजतादीच्छाया अपि तथात्वात् व्यधिकर-णप्रकारेच्छायां दोषस्याप्यन्वव्यतिरेकसिद्धहेतुत्वकल्पनया वा

तद्विरहादेव तदभावोपपत्तेरिति दिक् । अतो न तदनुरोधेन सामान्य-प्रत्यासत्तिशंकापीति तत्त्वं । व्याप्तिज्ञानमनुमितिसमानविषयत्वेन तद्धेतुः महानसीयधूमवन्हिव्याप्तिग्रहस्य पर्वतीयवन्हिविषयत्वं वन्हित्वसामान्या-सत्तितां विना नेति मानान्तरमाशंक्य निषेधति " व्याप्तिज्ञानमिति " कुतश्चिदिति इच्छाविषयस्य सिद्धत्वप्रमाणादित्यर्थः । प्रतिबन्धादिति-प्रवृत्तिहेतुभूत प्रधानप्रत्यक्षविरहादित्यर्थः ।

ननु जन्यजनकव्यक्त्यनुपस्थितौ कथं तद्गतहेतुहेतुमद्भावग्रह इत्यस्वरसादाह—' किंचेति ' ' युगपदिति ' पूर्वापरभावग्रहं विना न तद्घटित हेतुहेतुमद्भावग्रहः । सामान्यलक्षणाजनितज्ञानस्य समयविशे-षानुल्लेखितया तज्जनित स्मृत्या न पौर्वापर्यविषयत्वमिति न सामान्य-लक्षणया हेतुताग्रहनिर्वाहः । नच स्मृत्योः पूर्वापरीभावात्तद्गोचर ज्ञानेच्छयाऽनुभवपूर्वापरीभावासिद्धौ क्षणिकवस्तुनोरुत्पत्तिक्रममन्तरानु-भवक्रमानुपपत्त्या तत्पूर्वापरीभावानुमानमिति वाच्यं । ज्ञानेच्छानुभव-द्वयजनितसंस्कारद्वयेनोभयगोचर समूहालम्बनस्मृतेरुत्पाद इत्यर्थः । ननूपस्थितयोस्तयोर्मानान्तरेण पौर्वापर्यग्रहोऽस्त्वित्यत्राह—' प्रमाणेति ' । नन्वनुभवक्रमात् स्मृतिक्रम इत्याशंक्य निषेधति—' न च स्मृति- ' रिति । ननु सन्निकृष्ट रजतज्ञानेच्छापूर्वसमयविशेषावच्छिन्नतयानुभूते तत्समयविशेषावच्छिन्न रजतज्ञानत्वसामान्येन तद्ज्ञानानुभवात्तत्-स्मृत्योः पूर्वापरीभावविषयत्वोपपत्तिरित्यनुशयादाह—' किंच ' इति । ' नहि ' इति । अनागतसन्निकर्षस्य प्रत्यक्षहेतुत्वे ऽतिप्रसंगादिति भावः । " अन्यथा " इति घटत्वसमवायस्य पटेपि सत्वात् तस्यैकत्वादित्यर्थः । तथाच तत्तद्व्यक्तिनिरूपित वर्तमानसंबन्धस्य

सन्निकर्षतया तत्रोपयोग इति भावः।

" द्रव्यरूपस्य " इत्यनन्तरं व्यवहारार्थमिति शेषः। "तत्रापि" तमस आलोकाभावत्वपक्षेपि। 'यत् किञ्चित्' इति सामान्यात्यन्ताभावज्ञानस्य प्रतियोगितावच्छेदकावच्छिन्न यत्किञ्चित् प्रतियोगिज्ञानसाध्यत्वादित्यर्थः। " प्रागभावादेस्तु " इति त्वया तदनभ्युपगमात्सामान्यकार्यापत्तिरूपबाधकाच्चेति भावः। इदं च वस्तुगतिमनुरुद्ध्योक्तं सामान्यप्रागभावादिसत्वेपि तदत्यन्ताभाववद्यत्किञ्चित्प्रतियोगिज्ञानादेव तद्ज्ञानसंभवादिति ध्येयं। 'तत्तद्विशेष' इति तत्तत्प्रागभावादिविशेषज्ञानस्य प्रतियोगिविशेषावच्छिन्नज्ञानाधीनत्वाद्विशेषज्ञानस्य च सामान्यलक्षणया ऽसंभवादित्यर्थः ननु वन्ह्याद्यनुमितेर्विशेषणज्ञानजन्यत्वानुरोधेन सामान्यलक्षणासिद्धिरित्याशंक्याह—'इत्यलं'। विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वासिद्धेः विशेषणतावच्छेदक वन्हित्वप्रकारकज्ञानस्य च तां विनापि संभवादिति भावः।

( अग्निहोत्रसूरिकृत <u>अद्वैतरत्नकोशपूरणी</u> )

———

## (ग) सुखादिज्ञानविचारः—

इदानीं सुखादिसाक्षिरूपेणाप्यहंकारधर्मातिरिक्तं ज्ञानं निरूप्यते। सुखादिसाधक नित्यसाक्ष्यनुभवानंगीकारेऽन्वयादिदर्शनासंभवे ज्ञान-सुखादीनां कार्यकारणत्वग्रहासंभवः। तथाहि। सुखार्थी हि नृत्यादि-ज्ञाने प्रवर्त्तत इति तस्य तयोः कार्यकारणभावग्रहो वक्तव्यः। नृत्य-ज्ञानं च निरपेक्षमेव सुखजनकमिति तदनन्तरं तद्भवत्येवेति न सुखात् पूर्वं तदनुव्यवसायः संभवति। सुखानन्तरं तु सुखमेव ज्ञातव्यमित्य-नुपस्थितस्य ज्ञानस्य कथं कारणताग्रहः।

पूर्वपक्षी [ नैयायिकः ]:—सुखानन्तरं विनश्यदविनश्यतोः ज्ञान-सुखयोः समूहालम्बनं भवति।

सिद्धान्तीः—इति न वाच्यं। वर्त्तमानस्यैव प्रत्यक्षविषयत्वात्। अन्यथा ततः क्वापि निष्कम्पा प्रवृत्तिर्न स्यात्। ज्ञानत्वविशेषणज्ञान-दशायाम् तस्य नष्टत्वात्। न च स्मृत्यनुमितस्येष्टज्ञानस्य कारणताग्रहः प्रत्यक्षेण पूर्वापरीभावाज्ञाने तदयोगात्।

पूः—सुखं सकारणकं कार्यत्वादित्यनुमानात्तत्सिद्धिः।

सिः—इति न वाच्यं। मनःसंयोगादिजन्यत्वेन सिद्धसाधनात्। नच जन्यज्ञानजन्यमिच्छादेरपि ज्ञानजन्यत्वस्योक्तविधया दुर्ग्रहत्वात्। ज्ञानविशेषस्य जनकत्वासिद्धेश्च। सामान्यलक्षणयोपस्थितयोरपि पूर्वा-परीभावो दुर्ग्रह इत्युक्तम्।

तस्माद्यदेष्टज्ञानमुत्पद्यते तदा तन्नियमेन कश्चिज्जानातीति वाच्यम्। एवं तदनन्तरभावि सुखं चेति तयोः कार्यकारणभावग्रह इत्यतस्तदेव सुखादिसाधकं नित्यसाक्षिज्ञानमवश्यमभ्युपगन्तव्यम्।

( तत्वविवेकदीपनं = वेदान्ततत्त्वविवेकव्याख्या )

**टीकाः**—( अद्वैतरत्नकोशः = तत्त्वविवेकदीपनव्याख्या )

ननु नृत्यज्ञानानन्तरं सहकार्यन्तरं विना सुखानुत्पत्तौ तत्ज्ञानानुभवाद्धेतुताग्रहः स्यादित्यत्राह– ' नृत्यज्ञानंच ' । ' विनश्यदविनश्यतोरिति ' सुखोत्पत्तिदशायां विनश्यतो नृत्यदर्शनस्याविनश्यतः सुखस्य चानन्तरमनुव्यवसाय इति न वाच्यमित्यर्थः । न त्वनुव्यवसायदशायां तद्दर्शनस्य विनश्यत्ता, तस्य त्रिक्षणावस्थायित्वेन तदा नाशात् । ननु न क्षणसम्बन्धः प्रत्यक्षगोचरः किन्तु स्थूलोपाध्यवच्छेदरूपा वर्तमानता सा च विनश्यदवस्थैवेत्यनुशयादाह—' ज्ञानत्व ' इति । तथाच पूर्वक्षणेपि तदसत्वात् प्रत्यक्षेण न तदनुव्यवसाय इति भावः । नन्विष्टविषयस्मृतेष्टविषयज्ञानानुमानाद्धेतुताग्रह इत्याशंक्य निषेधति–' न च स्मृति ' रिति । वाक्यामर्शेन ज्ञानसुखयोरनुपस्थितौ न तद्ग्रहः, तद्रूपोपस्थितिश्च प्रत्यक्षेण, न स्मृतिलिंगकानुमानेनेत्यर्थः । जन्यज्ञानजन्याजन्यात्मविशेषगुणत्वादित्याद्यनुमानात्तत्सिद्धिरित्याशंक्य निषेधति- " नचजन्य " इति । ' ज्ञानविशेषस्य ' इति । नृत्यादिज्ञानजन्यत्वासिद्धिरित्यर्थः । ननु तदर्थं सामान्यलक्षणाभ्युपेयतां किमतिरिक्तसाक्षिकल्पनयेत्याशंक्याह—" सामान्य " इति ।

**टीकाः**—( अद्वैतरत्नकोशभावप्रकाशिका व्याख्या ):—

नच नृत्यज्ञानं सुखजनकमित्याप्तवाक्यात्तदवगतिरिति वाच्यं । वाक्यार्थज्ञानं विना तत् प्रयोगानुपपत्तेरिति , तस्मात् प्रत्यक्षमेव कारणताज्ञानं वाच्यमिति तच्च पौर्वापर्यरूपसहचारज्ञानाधीनं तच्च तदुभयकालीनं जन्यं न संभवतीति नित्यमित्याह—' तस्मादिति ' ।

पूर्वपक्षी ( प्राभाकरः ):—अस्तु तर्हि ज्ञानस्य ( जन्यज्ञानस्य ) स्वप्रकाशत्वं । +

सिद्धान्तीः—( कार्यस्य रूपादिवत्तदयोगात् ) ।

पूः—कार्यत्वेपि स्वप्रकाशत्वं किन्न स्यात् ।

सिः—इति न वाच्यं । तस्य कार्यकारणतादिग्राहक प्रत्यक्षादिविषयत्वेन तदयोगात्, लाघवात् स्वप्रकाशताया एव वृत्तित्वसंभवे गौरवेणानेकवृत्तितायाऽकल्पनात् । यत् कार्यं तदस्वप्रकाशमिति निरुपाधिव्याप्तिभंगप्रसंगश्च । न च रूपादावनात्मसमवेतत्वमुपाधिः । इच्छादौ साध्याव्याप्तेः । न चेच्छादावपि स्वप्रकाशत्वं, सविषयेच्छाया अपि स्वप्रकाशत्वेऽर्थप्रकाशतापत्तेः । नापि प्रमाणजन्यत्वमुपाधिः स्मृतौ समव्याप्त्यभावात् । प्रमाणजन्यत्वस्यान्यथापि संभवेन पक्षे साध्यव्यापकत्वाभावाच्च ।

शंकाः—स्वप्रकाशज्ञानस्य कथं स्वविषयसाधकत्वं ।

समाधानः—सुखादिसाधकतया क्लृप्त नित्य साक्षिप्रकाशवशात्तदुपपत्तिः । ( सुखादिसाधनार्थं क्लृप्त नित्यज्ञानस्यैव स्वयंप्रकाशत्वेन निखिलव्यवहारोपपत्तौ जन्यज्ञाने तत्कल्पने प्रमाणाऽभावात् ) । न च सुखेच्छादिकं स्वयंप्रकाश इत्युक्तं ।

---

+ तार्किकादिभिर्ज्ञानव्यवहारं प्रति ज्ञानज्ञानत्वेन हेतुत्वस्वीकारादनुव्यवसायः स्वीक्रियते । अनुव्यवसायस्वीकारो व्यर्थो व्यवसायस्य प्रकाशत्वसंभवादतएव प्राभाकरैस्तथैवोच्यते । नहि व्यवहारकारणान्तरे सति ज्ञानसत्वे ज्ञानव्यवहारो विलम्बते ।

पूर्वपक्षी:—अस्तु तर्हि मानसम् ।

सिद्धान्ती:—[मनसः सर्वप्रमाणसहकारिणः पृथक्प्रमाणत्वायोगात् ]। यथा प्रमाणसहकारिण आत्मादेर्न पृथकप्रमाणत्वमेवं मनसोपि, अन्यथा घटादिज्ञाने चाक्षुषत्वमानसत्वजात्योः संकरप्रसंगः, इन्द्रियत्वेन मनःकरणकत्वस्य तद्व्याप्तत्वात् । न च घटादिज्ञाने मानसत्वं कश्चिदनुभवति। इच्छादिकं प्रति मनसो वक्ष्यमाणविधया उपादानत्वाच्च न मनस्तत्र करणम् । असाधारणविषयाभावाच्च न मनः प्रमाणं। मनस एव सर्वप्रमासंभवे प्रमाणान्तरविलोपप्रसंगः । ( सुखादिविषयाऽनन्तज्ञाने प्रमाणाभावाच्च)। सुखादेर्लाधवसिद्ध नित्यानुभवः सिद्ध्यति । ×

× मनसः करणत्वस्य निरसिष्यमाणतया साक्षिचैतन्यगोचरापरोक्षवृत्त्यसम्भवाच्च । अहंकारादीनां स्वसत्ताकाले तत्सत्ताप्रकारकसंशयाद्यभावेन सदा तेषां संशयादिनिवृत्तिप्रयोजकतया सदा प्रकाशसंसर्गे वक्तव्ये सति कादाचित्कवृत्त्या तेषां सदा भानासम्भवाच्च, सदा साक्षिगोचरवृत्तिसन्तत्युपगमे युगपद् वृत्तिद्वयानभ्युपगमेन बाह्यघटादिप्रतीत्युच्छेदप्रसंगाच्च । तस्मात् साक्षिमात्रभास्यत्वमविद्याहंकारादीनां वक्तव्यं ।

( क ):—न च सुखादौ वृत्त्यभावे वृत्तिसूक्ष्मपरिणामरूप संस्कारः कुतः स्यादिति वाच्यं। सुखाद्युपहितचैतन्यस्यैव नाशस्य संस्कारत्वसंभवात् संस्काररूपमनःपरिणामविशेषस्यावश्यकत्वेपि वृत्तिज्ञानानावश्यकत्वाच्च ।

( अद्वैतसिद्धिगुरुचन्द्रिका ) ।

( ख ):—अन्ये नु तत् तत् वृत्त्युपहिताकारेण साक्षिण्यप्यनित्यत्वमभ्युपगम्यंत । अविद्यावृत्त्यैवाहंकारादिगोचर संस्काराधानमिति मतान्तरं ।

( वेदान्तसिद्धान्तसूक्तिमञ्जरीप्रकाशः ) ।

( ग ):—एवं चाज्ञानसुखादीनामपि तदाकाराविद्यावृत्तिप्रतिफलित चिद्भास्यत्वमेव । ( सिद्धान्तसम्प्रदायः )।

## (घ) आत्मा स्वयंप्रकाशः । *

आत्मा तावत् स्वयंप्रकाश इति सर्वैरभ्युपगन्तव्यो ऽन्यथा जगदवभासोऽनुपपन्नः । नचात्मा स्वसमवेतज्ञानेनैव जगदवभासयतीति वाच्यम् । अत्र प्रष्टव्यः ज्ञानं जडप्रकाशः चैतन्यप्रकाशो वा । आद्यपक्षे प्रष्टव्यः प्रकाशमानः सन् अर्थमवभासयति अप्रकाशमानो वा । आद्ये ऽनवस्थाप्रसंगः । नापि द्वितीयः स्वयमप्रकाशमानस्य विषयप्रकाश-

* भाट्टमीमांसका आत्मानं स्वयंप्रकाशं न मन्यन्ते यतः सोऽहंप्रत्ययग्राह्यः। तन्मते विषयगत ज्ञाततालिंगेनात्मनिष्ठज्ञानमनुमितं भवति । प्राभाकरमते ज्ञानमात्माश्रितः । तस्य ज्ञानस्य कर्म घटादिरर्थो भवति । स्वयंप्रकाशज्ञानमेवात्मनि घटादौच प्रमाणं । नैयायिका आत्मानमनुमानगम्यं मन्यन्ते । तेषां मते आत्मा नियमेन परोक्षो नित्यानुमेयश्च । ते ज्ञानसुखादीनां गुणत्वं कल्पयित्वा, मनोरूप एकेन्द्रियेणैव ज्ञानादीनां ग्रहणात् गन्धादिवत् विशेषगुणत्वंच कल्पयित्वैतादृशमनुमिन्वन्ति यथा ज्ञानसुखादयो महाभूतेन्द्रियमनोव्यतिरिक्तः कश्चिदर्थस्य विशेषगुणाः, यतो महाभूतादौ नियमेनादृष्टाः सन्तस्ते विशेषगुणाः यो यत्र नियेमनादृष्टः सन् विशेषगुणो भवति स तद्व्यतिरिक्तः कस्याप्यर्थस्य विशेषगुणरूपेण दृष्टो भवति यथाऽन्यत्रादृष्टं गन्धगुणं पृथिव्या एव विशेषगुणं । ज्ञानादिरपि तद्वत् । अतो यस्तज्ज्ञानादिगुणवान् द्रव्यःस आत्मा । इच्छादीनां गुणत्वात्तस्य द्रव्याश्रितत्वात् परिशेषादात्मा सिद्धो भवति । सांख्या एवं मन्यन्ते सुखदुःखमोहवत्वात् त्रिगुणात्मकमन्तःकरणमचेतनं । अचेतनाहंविशिष्टान्तःकरणे चिदाकारावभासो दृश्यते घटमहं जानामीत्यतोऽनुमानं भवति अचिदात्मनि चिदाकारावभासोधर्मस्तथाविध विंबसन्निधानपुरःसरो भवितुमर्हति प्रतिविम्बत्वात् । यो विम्बः स एवात्मा । वेदान्तमते नात्मा संविदधीनप्रकाशः किन्तु स्वयंप्रकाश एव । स्वयमपरोक्षेणार्थान्तरे प्रत्यक्षव्यवहारहेतुत्वादात्मा स्वयंप्रकाशः ।

त्वमनुपपन्नं । प्रदीपादेः स्वयंप्रकाशमानस्य विषयप्रकाशकत्वं दृष्टं । कल्पनायाः दृष्टानुरोधित्वस्यैव न्याय्यत्वात् । स्वयमप्रकाशमानस्य घटादेतुल्यत्वादन्यप्रकाशत्वमनुपपन्नं । न च चक्षुरादिवदप्रकाशमान ज्ञानस्याप्यर्थप्रकाशत्वं भवतीति वाच्यं । प्रकाशजनकत्वाच्चक्षुरर्थ-प्रकाशकमेव भवति नतु अर्थप्रकाशरूपः ज्ञानं तु प्रकाशमेव, न प्रकाशकं प्रकाशान्तराजननात् ।

किंच घटप्रतीत्यनन्तरमेव ' घटः प्रतीयते ' इति प्रतीतिविशेषण-रूपेण घटप्रतीतिर्दृश्यते । विशिष्टप्रतीति र्विशेषणप्रतीतिपूर्वकं भवतीति नियमः । तत्र कथं ज्ञानस्यास्वप्रकाशत्वविशेषणीभूतप्रतीतिं विना तद्विशिष्टप्रतीतिः स्यात् । ननु तत्रापि प्रतीत्यन्तरेण विशेषणप्रतीत्यु-पस्थितौ सत्यामेव तद्विशिष्टप्रतीतिरिति चेत्, न प्रतीतिविषयप्रतीते-रननुभवपराहतत्वात् । नहि घट इति प्रतीत्यनन्तरं घटः प्रतयित इति विशिष्टप्रतीतेः पूर्वं नियमेन प्रतीतिविषयप्रतत्यिन्तरं कश्चिदनुभवति ।

किंचास्ति तावत् सर्वेषां नियमेन स्वसमवेतज्ञानाविषयसंशय-विपर्यासविरहः। सच ज्ञानस्य जडप्रकाशत्वपक्षे किं निमित्त इति वक्तव्यं। संशयादिसामग्रीविरहप्रयुक्त इति चेत्, स वा किं निमित्तः ? किं विशेषादर्शनविरहप्रयुक्त उत कोटिस्मरणादिविरहप्रयुक्तः ? विशेषादर्श-नविरहो नाम विशेषदर्शनं । तच्च ज्ञाने ज्ञानत्वेन तद्दर्शनमेव। तच्च यद्युत्पन्नमात्रज्ञाने नियमेनांगीक्रियते तदा ज्ञानस्य नियमेन ज्ञानान्तरवेद्यत्वाभावादन्यथा सुषुप्त्याद्यभावप्रसंगात् व्यवसाय एवात्र तादृग्रूप इति वक्तव्यं । तथाच कथं तस्य परप्रकाश्यत्वं । एतेन विशिष्टवैशिष्ट्यज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानजन्यतया

प्रतीतिविषयज्ञानान्तरं मध्ये त्वयापि वाच्यं, घटज्ञानस्यैव ज्ञानत्व-प्रकारत्वाभावादिति निरस्तं । ×

किंच जिज्ञासितस्य ज्ञानस्यानुव्यवसायवेद्यत्वे सुषुप्त्यादिविराम-प्रसंगः । नच सामग्र्यन्तरप्रतिबद्धत्वादजिज्ञासितमपि सर्वदा न ज्ञायत इति न सुषुप्त्यादिविरामप्रसंग इति वाच्यं । इमं घटं जानामीति सन्निकृष्टघटानुव्यवसायस्थले घटज्ञानसामग्र्यां विद्यमानायामेवानुव्य-वसायदर्शनेन सामग्र्यन्तरस्य तदप्रतिबन्धकत्वात् । जिज्ञासितस्य च तस्य ग्राह्यत्वे ऽन्योन्याश्रयो ऽज्ञाते जिज्ञासायोगात् । ज्ञानाज्ञाने सति जिज्ञासा, तस्यां च सत्यां तत्ज्ञानमिति । किंच ज्ञानभेदे तत्क्रमे च तत्कारणमनःसंयोगभेदक्रमावेव प्रयोजकौ वक्तव्यावन्यथा धारावहन-स्थले ज्ञानभेदेन तत्क्रमयोरनुपपत्तेः । नच तत्र प्रागभावभेदाद्भेदः, सजातीयप्रत्यक्षविभुविशेषगुणानां पर्यायेणोत्पत्तिस्वभावाच्च क्रम इति वाच्यं। प्रागभावस्य प्रतियोगिभेदाधीनभेदकत्वेन प्रतियोगिभेदस्य तद्भे-दाधीनत्वे ऽन्योन्याश्रयात्, कारणक्रमाधीनं कार्यक्रमोपपत्तौ निर्बीज स्वभावकल्पनानुपपत्तेश्च। तथाच व्यवसायानुव्यवसाययोः भिन्नसंयोग-

---

× ज्ञानान्तरवेद्यत्वे ज्ञानस्य ज्ञानान्तरेण कः सम्बन्धः ? न तावत् संयोगः अद्रव्यत्वात्, नापि समवायः आत्मगुणयोरन्योन्यं तदयोगात्, नापि तादात्म्यं भिन्नयोरभिन्नयोर्वा तादात्म्यायोगात्, नापि विषयविषयिभावः तस्य द्रव्याद्यन्त-र्भावानन्तर्भावाभ्यामसम्भवात् । न चासम्बद्धमेव ज्ञानं ज्ञानान्तरज्ञेयम् अतिप्रसंगात् ।

यद्यनुव्यवसायाः प्रोच्यन्ते तदा अनवस्था विषयान्तरसञ्चाराभावः अननु-भवश्च तद्विरामे विषयपर्यन्तं संशय इत्यगत्या ज्ञानं स्वप्रकाशमेषितव्यं ।

जन्यतया ऽनुव्यवसायक्षणे व्यवसायस्य नष्टत्वात्तस्य प्रत्यक्षत्वानुपपत्तेः। सामग्रीभेदतत्क्रमयोरेव कार्यगततत्प्रयोजकत्वं सर्वत्रैवं दर्शनात्। तौ चात्र सुलभावनुव्यवसायसामग्र्यां व्यवसायस्यानुप्रवेशादिति चेत्, तथापि ज्ञानविषयसविकल्पकनिर्विकल्पकाद्यनेकक्षणव्यवहितत्वाद् व्यवसायस्य प्रतीयत इति वर्त्तमानत्वप्रतीत्यनुपपत्तिः।

ननु स्वप्रकाशत्वं नाम स्वविषयत्वं तच्च न संभवति, ज्ञानजनकेन्द्रियप्रत्यासत्त्याश्रयत्वस्यैव ज्ञानविषयत्वे प्रयोजकत्वात्, ज्ञानस्य च तादृशप्रत्यासत्त्याश्रयत्वाभावात्, ततः स्वप्रकाशत्वानुपपत्त्यैव परप्रकाश्यत्वमिति चेत्। नहि स्वप्रकाशत्वं स्वविषयत्वमित्यंगीक्रियते, विरोधात्, किन्तु प्रकाशान्तरसम्वन्धं विना प्रकाशमानत्वं, स्वव्यवहारे स्वातिरिक्तज्ञानान्तरानपेक्षत्वं वा। ततश्च न तादृशप्रत्यासत्त्याश्रयत्वापेक्षा। न च तदपि ज्ञानविषयत्वे ऽनुगतं प्रयोजकं, घटादीनामीश्वरज्ञानविषत्वाभावप्रसंगात्। जन्यज्ञाने ऽयं नियम इति चेन्न, आत्मादेरपि घटादिज्ञानविषयत्वप्रसंगात्, प्रमेयमिति ज्ञानस्यापि स्वविषयत्वेन स्वयंप्रकाशत्वप्रसंगाच्च। ननु तस्यापि प्रमेयत्वलक्षणप्रत्यासत्त्याश्रयत्वमस्तीति चेत्, न ह्येतावता स्वयमस्वयं भवति नवा स्वविषयप्रकाशो ऽप्रकाशः।

किंच ज्ञानस्यास्वयंप्रकाशत्वे धारावहनवुद्धिर्न सिद्ध्यति। सा किं प्रत्यक्षेण किंवा प्रकारान्तरेण। नाद्यः धाराविरामप्रसंगात्। चरमक्षणे च पूर्वसंविदां विनष्टत्वेन तदनुपपत्तेः। अस्तु तर्हि व्यवहारलिंगेन तज्ज्ञानमिति चेत्, न तत्तद्वुद्धिजन्यव्यवहारस्य तदा तदा ज्ञाने घटवुद्धिधाराविरामप्रसंगात्। चरमक्षणे च पूर्वपूर्ववुद्धिजन्यव्यवहाराभावात्।

ननु तत्तत् वुद्धिजन्यस्मृत्या तदनुमानमिति चेत्, सापि तावत् पूर्वोत्तरवुद्ध्योर्मध्ये न भवत्यउक्तदोषात्, नापि चरमवुद्ध्यनन्तरं, तत्रापि प्रतिज्ञानं स्मृतिभेदेन तावत्घटानुभवमात्रसिद्धावपि नाविरतधाराततसिद्धिः स्मृत्यभेदे तु नतरां। ननु एका स्मृतिस्तावत्कालावच्छिन्नं घटं विषयीकरोतीति तावत्कालावच्छिन्न घटानुभवोऽपि सिध्यतीति चेन्न, अनुभवस्य कालाविषयकत्वेन स्मृतेरपि तदविषयत्वात्। घटादिमात्रविषयिण्या च स्मृत्या तदसिद्धेः। एकविषयानेकसंस्कारस्यैकस्मृत्यजनकत्वाच्च। ÷ स्वयंप्रकाशत्वपक्षे तु तत्तत् घटादिज्ञानेन वा तज्जन्यतत्तज्ज्ञानाविषयतत्तत्संस्कारेण वा एकस्मृत्या ऽनेकवर्णाव-

---

÷ यत्तु नेदं स्मरणं, किन्तु तद्गोचराऽनुमितिस्तन्न। लिंगाऽभावेनऽनुमित्ययोगात्। तथाहि न तावदर्थव्यवहारो लिंगं, व्यवहाराज्ञानेऽपि पूर्वोक्ताऽनुसन्धानदर्शनात्। व्यवहारेण ज्ञानमात्रसिद्धावपि तस्मिन् प्रहरसम्वन्धस्य चाक्षुषत्वादिविशेषस्य च सिद्ध्ययोगाच्च। न च प्रहरत्वं पक्षतावच्छेदकं कृत्वा एतत्प्रहरा ऽवच्छिन्नो ऽहं घटज्ञानवान् घटव्यवहर्तृत्वादिति साध्यमाने पक्षताऽवच्छेदकाऽवच्छेदेन साध्यसिद्धेः प्रहराऽवच्छिन्नज्ञानसिद्धिरिति वाच्यम्, तावताऽपि चाक्षुषत्वादिविशेषस्य ज्ञाने ऽसिद्धेस्तेन विना ऽद्राक्षमस्प्राक्षमित्याद्यनुभवायोगात्। यथाकथंचिज्ज्ञानाऽनुमानेऽपि तदा ऽन्यन्नावेदिषमितीतरविषयकज्ञानाभावप्रतीत्यनुपपात्तिः सुदृढैव। नच घटज्ञानेनैव तदानीन्तनेतरज्ञानाभावानुमा, युगपदनकविषयक ज्ञानसम्भयेनैकज्ञानस्येतरज्ञानाऽभावेन सम व्याप्त्यभावेनाऽनुमित्ययोगात्। तस्मात् स्वप्रकाशात्मस्वरूपज्ञानेनैव घटपटाद्याकारवृत्तयस्तदभावाश्च भास्यन्त इति तद्बलादेव धारानुसन्धानम्।

गाह्येकस्मृत्या वर्णानामिव तत्सिद्धेः। तस्मात् ज्ञानस्य जडप्रकाशत्वमनुपपन्नं। *

अस्तु तर्हि ज्ञानं स्वप्रकाशं, आत्मा च तेनैव विषयान् कर्मतया पश्यन् स्वयं च तदाश्रयतया सिध्यति। तस्यापि स्वप्रकाशत्वे उभयस्वप्रकाशत्वकल्पनागौरवात्, ज्ञानकर्मत्वे च जडत्वप्रसंगादिति चेत्, तर्हि तादृशी संविदात्मैव स्यात्। तथाहि। आत्मा संविदभिन्नः संवित्कर्मतामन्तरेणापरोक्षत्वात् संविद्वत्। न चाप्रयोजको हेतुः विपक्षेबाधकाभावादिति वाच्यं, संविद्विषयत्वानात्मत्वापत्त्योरेव

---

* ज्ञानप्रामाण्यसंशये ऽर्थसंशयदर्शनात्तन्निश्चये तद्दर्शनात् निश्चितप्रामाण्यकमेव ज्ञानमर्थसत्तानिश्चय इति वक्तव्यं तन्निश्चयश्च नानुव्यवसायात्तस्य निरस्तत्वात्तस्यापि निश्चितप्रामाण्यस्यैव प्रामाण्यनिश्चयतया ऽनवस्थानाच्च। नाप्यनुमानादिकमनवस्थानादेव। तस्मात् स्वयंप्रकाशतया स्वस्यैव स्वप्रामाण्यनिश्चयरूपत्वं वक्तव्यमिति ज्ञानस्वप्रकाशत्वं सुदृढं।

शंकाः—स्वप्रकाशे प्रमाणसद्भावे वेद्यत्वादस्वप्रकाशत्वमभावे च प्रमाणाभावादसिद्धिरित्युभयतःपाशा रज्जुः।

उत्तरः—अनुभूतेः प्रमाणजन्यस्फुरणाश्रयतया स्फुरणकर्मतया वा घटादिवद्विषयभावाभावेपि प्रमाणजनितान्तःकरणवृत्तिव्याप्यत्वेन विषयत्वांगीकारेऽपि स्वप्रकाशत्वाव्याघातात्। अयं भावः—न प्रमाणप्रवृत्तिमात्रादनुभवकर्मत्वं येनास्वप्रकाशता स्यादपितु तदाकारान्तःकरणवृत्तिरेव प्रमाणैर्जन्यते। नच वृत्तिविषयतामात्रादस्वप्रकाशता स्यात् प्रकाशप्रकाश्यत्वाभावात् स्वरूपप्रकाशाभिव्यञ्जकमात्रत्वाद्वृत्तेः। तेन न वेद्यत्वप्रसक्तिर्नाप्यप्रामाणिकामिति।

नहि प्रमाणावेद्यत्वं स्वप्रकाशत्वं किन्तु स्वविषयापरोक्षव्यवहारजनने प्रकाशान्तरनिरपेक्षत्वं। तच्च स्वप्रकाशत्वसाधकप्रमाणगम्यत्वेपि न विरुद्ध्यते प्रमाणान्तरनिरपेक्षतयैव स्वाश्रये स्वविषयापरोक्षव्यवहारजनकत्वात्।

वाधकत्वात्। संविदतिरिक्तस्य संविदधीनप्रकाशस्य तदुभयसद्भावनियमात् × संविद आत्मातिरिक्तत्वे कल्पनागौरवाच्च। तथाहि यदि स्वप्रकाशसंविद आत्मातिरिक्ता इति कल्प्येरन् प्रतिविषयमन्यदन्यदेव ज्ञानं कल्पनीयं। तथा भिन्नेष्वेकरूपानुभवसिद्ध्यर्थं ज्ञानत्वं चापरं कल्पनीयं। संविद आत्मत्वे तु नैवमिति।

ननु घटज्ञानमुत्पन्नं घटज्ञानं नष्टमिति तावदनुभूयत इति चेत्, न, तयोरपि घटादिसम्वन्धविषयत्वेन संविद्विषयत्वाभावात्। तस्मात् स्वयंप्रकाशज्ञानाभिन्नतया ऽत्मा स्वप्रकाश इत्येव सर्वैरुपगन्तव्यं। नन्वहंजानामीति ज्ञानाश्रयतया प्रतीयमान आत्मा कथं तदभिन्नः स्यादिति चेत्, न ह्यत्रात्मा ज्ञानाश्रयत्वेन प्रतीयते किन्त्वहंकार एव। स एवात्मेति चेत्, न, मामहंजानामीति ज्ञानकर्मतया प्रतीयमानस्यैव ज्ञानाश्रयत्वानुभवात् ज्ञानकर्मत्वेनानुभूयमानतया ऽहंकारस्य घटादिवदनात्मत्वानुमानस्य निरंकुशत्वात्। तस्मात् ज्ञानवेद्यस्यानात्मत्वनियमात् तस्यैव च तदाश्रयतया प्रतीयमानत्वात् नात्मनो ज्ञानाश्रयत्वं। कथं तर्हि चैतन्यस्य ज्ञानस्यानात्माश्रयत्वमिति चेत्, न कथंचित्। का

---

× यदि संविद्व्यतिरिक्तः स्यात्तर्हि कर्मतयैवापरोक्षव्यवहारविषयः स्यात् विषयेषु तथा व्याप्तेः तेन कर्मत्वं व्यावर्त्तमानं संविदव्यतिरिक्तत्वं व्यावर्त्तयति। संविदाश्रयतयाऽपरोक्षत्वे चानुमानविरोधमपि, संवेदिता संविदाश्रयतयाऽपरोक्षो न भवति अपरोक्षत्वात् संवेदनवदिति। न च विपक्षे वाधकतर्काभावः, स्वसत्तायां प्रकाशव्यभिचारवतः प्रकाशान्तराधीनव्यवहारवत्त्वे कदाचित् संशयादिगोचरत्वप्रसंगस्यैव वाधकत्वात्।

तर्हि जानामीति प्रत्ययस्य गतिः । तस्यान्तःकरणवृत्त्याश्रयत्वाविषयत्वेनोपपत्तेः । +

( नृसिंहाश्रमविरचित संक्षेपशारीरकतत्त्ववोधिनी )

---

+ आत्मा हि जन्तुमात्रस्य सन्देहविपर्ययपरोक्षापरोक्षप्रमास्थले तदभावदशायां चैकरूपतया ऽपरोक्षो निर्णीतः प्रथते । आन्तराश्च ज्ञानादयः सहोत्पत्तिविनाशाभ्यामव्याभिचारितप्रकाशाः । तदेतसर्वं स्वप्रकाशं ज्ञानादिसाक्षिणं विहाय प्रकारान्तरेणोपपादयितुं न शक्यते ।

तथाहि—तार्किकमते तावदनुव्यवसायगम्यं ज्ञानं। न चोत्पन्ने ज्ञाने नियमेन तदनुव्यवसायो ऽस्तीति शक्यते वक्तुम्। तथासति आन्तरज्ञानधाराणामविच्छेदप्रसंगेन वाह्यव्यवहार एव लुप्तः स्यात् । एवं ज्ञानोत्पत्त्यादिकमपि कदाचिदेव प्रकाशमानं स्यात् । न च तन्मते ज्ञानोत्पत्तिः प्रत्यक्षीकर्त्तुं शक्यते । प्रत्यक्षे हि विषयस्य कारणत्वं वक्तव्यं । ततश्च ज्ञानोत्पत्त्यनन्तरक्षणे तद्विषयेण प्रत्यक्षेण भवितव्यमित्यापन्नम् । तस्यां च दशायामुत्पत्तेरभावः, तस्याः क्षणिकत्वात् । विषयाभावकाले च ज्ञानं न तत्र प्राकट्यप्रयोजकं । एवमात्मनोऽपि नाव्याभिचरितप्रकाशत्वं शक्यं तन्मते वक्तुम् । न हि स्वगतविशेषगुणानवगाहिद्रव्यप्रत्यक्षं तन्मते सम्भवति । तथाचात्मन अव्याभिचरितप्रकाशत्वाय आन्तरपदार्थज्ञानधाराभ्युपगमे वाह्यपदार्थज्ञानलोप एव स्यात् । न चानुभवानुसारिणाऽत्मादीनामव्यभिचरितप्रकाशत्वं नास्तीति शक्यते वक्तुम् । अनुभवापलापे च शून्यवादिमतमेवास्थेयम्, किमर्द्धजरतीयेन । अपिच ध्यानकाले नानुव्यवसायः शक्यते वक्तुं । ध्यानसामग्र्या इच्छाघटितत्वेन ध्येयव्यतिरिक्तध्यानान्तर्गतवृत्तिविषयानुव्यवसायप्रतिवन्धकत्वात् । ततश्च "एतावन्तं कालं ध्यायन्नेवासमि" त्यनुसन्धानमनुपपन्नं स्यात् । अतः साक्षिरूपः प्रकाशः सर्वदात्मतद्धर्मावभासको ऽनुस्यूतो ऽस्तीति स्वीकर्त्तव्यम् ।

ननु प्राभाकरमते ज्ञानं स्वप्रकाशं, तत्र चात्मा ऽश्रयतया भासते, घटादिकं च विषयतया । तन्मते ज्ञानाकारश्च " घटमहं जानामी " त्येवंरूपः । तथा-चात्मानि किञ्चिज्ज्ञानं सदा वर्त्तत एवेति ज्ञानात्मनोरव्यभिचरितप्रकाशत्वमुपपद्यत इति न नित्यसाक्ष्यभ्युपगन्तव्य इति चेन्न । तन्मतेपि सुखादीनामव्यभिचरितप्रकाशता न स्यात् । ज्ञानोत्पत्तिश्च न प्रत्यक्षा स्यात् । अपिच तन्मते भासमानतायां वहूनि प्रयोजकानि कल्पनीयानि; आत्मानि ज्ञानाश्रयत्वं, ज्ञाने ज्ञानाभिन्नत्वं, घटादौ ज्ञानविषयत्वं । तदपेक्षया वरं ज्ञाने क्लृप्तं ज्ञानाभिन्नत्वमेव सर्वत्र भासमानतायां प्रयोजकमाश्रयितुम् ।

तच्च वेदान्तिन एवोपपद्यत; आत्मनो ज्ञानरूपत्वांगीकारात्, विषयाणां च ज्ञानरूपब्रह्माध्यस्तत्वांगीकारात्, न चैतत् नित्यज्ञानाभ्युपगमं विना वक्तुं शक्यते । अध्यासे ह्यधिष्ठानं प्रागेवाध्यासात् भासमानतया लब्धसत्ताकमपेक्षितम् न चैतजन्यस्य घटप्रत्यक्षस्य संभवति, तस्य घटजन्यस्य घटात् प्रागेव लब्धसत्ताकतया भासमानत्वानुपपत्तेः । एवं च सति सर्वत्र " घटः स्फुरति ज्ञानं स्फुरति आत्मा स्फुरति " इति व्यवहारः स्फुरणतादात्म्यविषयक उपपन्नो भवति । परमते चात्मानि ज्ञानाश्रयताविषयक इति वैरूप्यं भवेत् । नित्यसाक्ष्यभ्युपगम एव च सुषुप्तिनिरोधसमाधिकालयोरात्मा ऽव्यभिचरितप्रकाश इति वक्तुं शक्यते । न हि सुषुप्तौ जन्यज्ञानं संभवति, एवं निरोधसमाधावपि । तस्यामपि जन्यज्ञानासंभवेन " एतावन्तं कालं निरुद्धचित्त एवासमिति " परामर्शानुसारेण निरोधसाक्ष्यभ्युपगन्तव्यः । ततश्च नित्यज्ञानसिद्धौ ज्ञानमुत्पन्नं ज्ञानं विनष्टमहं ज्ञानवान् इत्यादिव्यवहारो वृत्तिज्ञानोपाधिक इत्यवगन्तव्यम् ।

———

## ( ङ ) अन्तःकरणवृत्तिनिरूपणम्ः—

नन्वेवमनुभवरूपात्मैवाहमिति व्यवहारविषयोस्तु, किं जडपरिणामि तद्धर्मिकल्पनेन, जानामीत्यस्य चैतन्याविषयव्यवहारत्वेनाप्युपपत्तेरिति चेत् । न घटाद्यविद्यानिवृत्तेः चक्षुरादिव्यापारानुविधानदर्शनेन तज्जन्य-वृत्तेरवश्यं वाच्यत्वात् । चक्षुषः स्वयं तत्राहेतुत्वात् ।

ननु चक्षुःसंप्रयोगादिसहकृतमेव चैतन्यमविद्यानिवर्त्तकं भवतु । न च संप्रयोगस्य जडत्वान्नाविद्यानिवर्त्तकत्वमिति वाच्यं, वृत्तेरपि तुल्य-त्वात् । चैतन्यसहकारित्वमात्रं त्वन्यत्रापि तुल्यं । न चानुगताविद्या-निवृत्तौ चक्षुःसंप्रयोगादेरननुगतस्यानुकूलत्वमयुक्तमिति वाच्यम् । इन्द्रियसंप्रयोगत्वेनैवानुगतत्वादिन्द्रियत्वं चाविद्यानिवृत्त्यैव निरुच्यतां। व्यासंगदशायां सत्यपीन्द्रियसंप्रयोगे चैतन्यै चाविद्यानिवृत्तिर्नास्तीति चेत् । न । समनष्केन्द्रियसंप्रयोगस्यैवानुकूलत्वादिति ।

मैवं । आत्माविद्यानिवृत्तौ समनष्केन्द्रियसंप्रयोगाभावात् । मनसो-ऽनिन्द्रियत्वाच्च । यतोऽपरोक्षवृत्तिरेव तत्राविद्यानिवृत्तिप्रातिवन्धकावर-णानिवृत्तये ऽपेक्षिता ततो लोकेपि तथेति तत्संवन्धि परोक्षस्थले व्यव-हारस्य कदाचिद्दर्शनेनापि तत्प्रयोजकतया वृत्तिः सिध्यति तदभावे पर्वते वह्यादिसंशयानिवृत्तिप्रसंगाच्च । एवं श्रोत्रेऽनेकशब्दसमवधानद-शायामेकशब्दवुभुत्साप्रयोज्यापि तद्वृत्तिरंगीकार्या, चैतन्यमात्रस्ये-न्द्रियसंवन्धविशिष्टस्य वा प्रागपि सतो वुभुत्साप्रयोज्यत्वासंभवात् । अविद्यानिवृत्तिरेव तत्र वुभुत्सया साक्षात् साध्यत इति चेत्, शब्दा-न्तरे केवलेन्द्रियसन्निकर्षः कचित् वुभुत्साहेतुरित्यननुगमात् । अन्ये-च्छयान्यासंभवाच्च । नचाविद्यानिवृत्तिरेव वुभुत्साप्रकृत्यर्थोस्त्विति

वाच्यं । धर्मादावपि जिज्ञासासत्वात् । वेदैश्चसर्वैरहमेव वेद्य इत्यादि शास्त्राद्वेदजज्ञानप्रसिद्धेश्च । एवं च सति जानामीत्यनुभवोपि न व्यवहारमात्रतया कल्प्यत इति प्रत्यक्षादिसिद्धा वृत्तिः । तत्सामग्रीमादायैवानुभवादिसिद्धवृत्त्यपलापे परेषामपि ज्ञानं न सिध्येत् । सा च न केवलात्मजन्या निरवयवस्यानुभवरूपात्मनः संप्रयोगाद्यसंभवे तत्परिणामानुपपत्तेरित्यनात्मापरिणामी जडोहंकारः । **

---

** नच व्यासंगानुपपत्त्या मनःकरणसिद्धिः, ज्ञानकरणचक्षुरादेर्मनःसंयोगाभावस्यैव व्यासंगशब्दार्थत्वादिति वाच्यम्, अनेकज्ञानसामग्रीसमवधानकालीनैकज्ञानहेतुतया तदितरप्रतिबन्धकतया च क्लृप्तबुभुत्साव्यतिरेकस्यैव तदातन ज्ञानाभावप्रयोजकतया तस्यैव व्यासंगपदार्थत्वेन चक्षुरादिमनःसंयोगव्यतिरेकस्य तथात्वाकल्पनात् । धर्मिकल्पनागौरवादिति चेन्न, अहं जानामीत्यादि प्रत्यक्षादेव तत्सिद्धेः । न चेदमात्मविषयं न मनोविषयमिति वाच्यम्, आत्मनो ज्ञानरूपत्वेन ज्ञानाद्याश्रयत्वानुपपत्त्या परिशेषेण मनस एव तदाश्रयत्वात् ।

अन्तःकरणातिरिक्तस्यात्मनो निरवयवतया निमित्तसंयोगाभावेनानुपादानतयाऽन्तःकरणस्यैव तदुपादानतया तत्करणत्वानुपपत्तेः । नन्वहं जानामीत्यात्माश्रयतया प्रतीयमानस्य कथमन्तःकरणाश्रयत्वमिति चेन्न, "अहं जानामि" इत्यहमर्थाश्रयत्वमनुभूयते नत्वन्तःकरणातिरिक्ताहमर्थाश्रयत्वमन्तःकरणस्याप्यहमर्थत्वं व्यवस्थापितमेव ।

अतीन्द्रियत्वस्येन्द्रियत्वव्यापकतया मनसि तदभावेनेन्द्रियत्वासिद्धेः । न चात्मादिसाक्षात्कारानुपपत्त्याऽतीन्द्रियत्वमिन्द्रियत्वं च कल्प्यमिति वाच्यम् । आत्मनः स्वप्रकाशत्वकल्पनेनैव तद्धर्मसुखादिसाक्षात्कारोपपत्तौ तत्कल्पने प्रमाणाभावात् । न च चक्षुर्जन्यज्ञानस्य चक्षुःसन्निकर्षानाश्रयतया चाक्षुषज्ञानाविषयत्वेनास्वप्रकाशतया तदभिन्नत्वेनात्मस्वप्रकाशत्वं न संभवतीति वाच्यं ।

चक्षुर्जन्यज्ञानातिरिक्तात्मस्थानाभिषिक्त नित्यचैतन्यस्यैव स्वप्रकाशत्वकल्पनात् चक्षुर्जन्यज्ञानस्यान्तःकरणपरिणामत्वेन जडत्वात् । परमतेपीश्वराश्रयतया नित्यज्ञानस्य सर्वविषयतया स्वप्रकाशस्याभ्युपगमेन तस्यैवात्मत्वेनेश्वरत्वे नानाशरीरप्रवेशेन जीवत्वे च सति तदाश्रयेश्वरस्य तद्भिन्नानन्तजीवानां च कल्पने प्रमाणाभावत् धर्मिकल्पनागौरवाच्च । सुखदुःखादिविचित्रस्य च परमत इव प्रमातृकर्त्रहमर्थभेदादेवोपपत्तेः । न चाहमर्थद्वैरूप्यकल्पने गौरवं, वैपरीत्यात् । अन्तःकरणातिरिक्ताहमनुभवविषय आत्मा कल्पनीयः तन्नानात्वं कल्पनीयं तत्रचात्मत्वं जातिः तयोश्चपरस्परतादात्म्यापन्नयोरहमनुभव-विषयत्वमस्माकं ( वेदान्त ) मते तु क्लृप्तयोरेवान्तःकरणज्ञानयोः परस्परतादा-त्म्यापन्नयोरहमनुभवविषयत्वं कल्पनीयं । नित्यज्ञानञ्चेश्वरे संप्रतिपन्नमेव तदेव-चेश्वरस्याहमनुभवविशेष्यत्वेन चास्माकमात्मेत्यतिलाघवम् । आत्मानात्मनोः परस्परतादात्म्यापन्नयोरहमनुभवविषयत्वं मतद्वयसंप्रतिपन्नमेव परन्तु परेषां य आत्मा कर्त्रादिरभिमतः सोऽस्माकमन्तःकरणं यच्चात्मत्वं सकलकर्त्रनुगतं तदेव चैतन्यं न आत्मेति उभयातिरिक्तञ्चान्तःकरणं परस्य कल्पनीयमिति गौरवं ।

### ( च ) युक्त्यन्तरेणानुव्यवसायनिरासः—

चैतन्यमहंकारे शरीरघटादौ चाधिष्ठानतयानुस्यूतम् । घटस्फुरतीति घटादावपि स्फुरणानुभवात् । न च घटस्फुरतीत्यात्मसमवेतज्ञानविषयत्वानुभव इति वाच्यं । वेद्यज्ञानेन स्वविषयत्वस्यघटादीनिष्ठस्यानुभवितुमशक्यत्वात् । अनुव्यवसायेनानुभूयत इति चेत् । न, तदा व्यवसायविषयत्वस्य वर्त्तमानत्वासंभवात् । घटनिष्ठस्य व्यवसायविषयत्वस्य तदविषयस्यानुव्यवसायेन विषयीकर्त्तुमयोगाच्च । नहि वाह्ये व्यवसायाविषये मनःसामर्थ्यमस्ति । न च घटतद्ज्ञानातिरिक्तं विषयत्वमेव नास्तीति वाच्यं । घटज्ञानस्य विषय इति तद्भेदेन तस्यानुभवात् । देवदत्तज्ञानं घटं च जानतो देवदत्तो घटं जानाति नवेति संशयदर्शनेन तस्य ज्ञानघटादिस्वरूपादन्यत्वात् । नच घटतज्ज्ञानयोः संवंधापरिज्ञानात् तथा संशय इति वाच्यं । ज्ञानज्ञेययोः परमते विषयविषयिभावातिरिक्तसंवंधाभावात् तस्यच स्वरूपद्वयमात्रत्वे दोषानपायात् । ( क्रोडपत्रे द्रष्टव्यः ) । नच ज्ञानविशेषस्य स्वरूपं घटे न सम्वन्धः तस्य च पुरूषान्तरे ज्ञानात् तत्संशय इति वाच्यं । ज्ञानसामान्यस्वरूपादतिरिक्तस्य देवदत्तो घटविषयज्ञानवानिति शब्दादपि प्रतीत्यसंभवेन संशयानिवृत्तिप्रसंगात् । घटविषयत्वमेव विशेषः तच्च शब्देन प्रतिपन्नमिति चेन्न । घटतज्ज्ञानस्वरूपमात्रस्यैव तद्विषयत्वे तयोः स्वरूपेण ज्ञानदशायामपि संशयो न स्यादित्युक्तम् । अतिरिक्तस्तु व्यवसायागोचर एव ।

नापि स्वप्रकाशज्ञानविषयत्वं घटस्फुरतीति व्यवह्रियत इति वाच्यं । जन्यज्ञानस्यास्वप्रकाशत्वात् । नापि ज्ञानजन्या ज्ञातता, तत्स्फुरण-

जन्यत्वे प्रमाणाभावात् । एतावन्तं कालमिदं नास्फूरदिदानीं स्फुरतीति स्फुरणकादाचित्कत्वानुभवस्याज्ञाताभिव्यक्तस्फुरणविषयत्वेनोपपत्तेस्तदभावकल्पनायोगात् । ज्ञातताया अनन्तरं निरसिष्यमाणत्वाच्च । तस्मात् चैतन्यं घटाद्यधिष्ठानमभिव्यक्तं तत्स्फुरणं । घटादेरपरोक्षत्वार्थमप्यात्मचैतन्यतादात्म्यमभ्युपेयमेवेति चैतन्यमहंकारविषयादिष्वनुस्यूतं ।

विषयाणामात्मचैतन्यतादात्म्याभावे मयावगता इति संबन्धावभासो न स्यात् । आत्ममात्रसमवेतप्रकाशस्य घटादितादात्म्याभावेन घटादेरपरोक्षत्वासंभवात् ।

स्फुरणमेकमपि घटस्फुरणंपटस्फुरणमित्यादि भेदानुभव उपाधिबलादुपपद्यते ।

शंकाः—स्वतोभेदेऽसिद्धे भेदप्रतीतिरौपाधिकी, स एव कुतः ।

समाधानः—चैतन्यं हि शरीरानवच्छिन्नप्रदेशे नानुभूयत इति सर्वजनसिद्धं । तच्च सर्वगतात्मधर्मत्वे नोपपद्यते । निरंश एकस्मिन्नेकस्य युगपत् भावाभावयोरयोगात् । नाप्यण्वात्मधर्मत्वं, स्वोपादानादृते धर्माणामसत्वेन शरीरव्यापित्वानुपपत्तेः । नच मध्यमपरिमाणात्मधर्मत्वमात्मनोऽनित्यत्वापत्तेः । तस्मादनाश्रितचैतन्यं मध्यमपरिमाणमिति द्रव्यमेव तत्, तस्यापि सावयवत्वे ऽवयवानां चैतदवयवव्युत्पादनत्वायोगात्, तेषामपि चैतन्ये युगपदनेकज्ञानप्रसंगात्, प्रमाणाभावाच्च। अतो निरंशचैतन्यं मध्यमपरिमाणमनुभूयत इति वाच्यं, नच तदुपपद्यत इति सर्वगतमेव चैतन्यमुपाधितस्तथानुभूयत इति स्वाभाविकि

एव चैतन्याभेदः। भेदस्तूपाधेःपरामर्शेसत्येव प्रतयिमान औपाधिक एवोचितः। ×

संविदो जन्मविनाशादिमत्वं वदन् प्रष्टव्यः— किं तत्प्रमाणान्तरेण गृह्यते उत स्वेनैव। नाद्य। स्वप्रकाशसंविदः प्रमाणान्तराविषयत्वेन धर्मिग्रहणाधीनग्रहणस्योत्पत्त्यादिधर्मस्य प्रमाणेन ग्रहणानुपपत्तेः। न द्वितीयः। स्वसत्ताकाले स्वमात्रसाक्षिणः संवेदनस्य तदा ऽविद्यमाननाशादिग्राहकत्वानुपपत्तेः, धर्म्यादिसापेक्षभेदादिग्राहकत्वानुपपत्तेश्च। तस्मात् संविद उत्पादाद्यभावादात्मैव संवित्। (अनुभवस्यैकत्वादेव स्थायित्वमतोनुभवआत्मा)।

शंका—एवमपि संविद आत्मत्वमनुपपन्नं तस्याश्चिदात्मधर्मत्वात्।

उत्तर—तदप्यसिद्धं। यज्ज्ञानमस्याः संविदो धर्मस्वरूपविषयीकरणे धर्मत्वग्रहणे समर्थं तादृशं किञ्चन मानं नास्ति, तस्याः स्वप्रकाशत्वेनैव प्रमाणविषयत्वासंभवात्। +

---

× यथा नैयायिकादिमतं पाकरक्ते नीलो यो न भवतीति बुद्धिर्नैल्यव्यतिरेकमेव विषयीकरोति न घटादिभेदं, तं च घटनैल्यं न भवति पटनैल्यमिति बुद्धिर्घटादिव्यतिरेकमेव नतु नैल्यभेदः, भट्टमतं च वर्णभेदबुद्धिस्तद्व्यञ्जकध्वानिभेदमेव तथा घटसंविन्न भवति पटसंविदिति बुद्धिर्घटादिव्यतिरेकं विषयांकरोतीति न संविद्भेदानुभवविरोधः।

+ विषयसंविदाश्रयत्वमात्मनः केन सिद्ध्यति किं तेनैव विषयज्ञानेनोतान्येन। नाद्यः। स्वस्य विषयत्वानुपपत्तेः, नहि स्वस्य स्वविषयत्वं विनापि स्वाश्रयत्वमात्मनो विषयंकर्त्तुं स्वयमलं। न द्वितीयः। स्वप्रकाशज्ञानस्य ज्ञानान्तराविषयत्वात् संविदतिरिक्त संविदधीनप्रकाशस्य संवित्कर्मत्वनियमाच्च। ततः परिशेषादात्मा स्वयंप्रकाश इत्येवाभ्युपगन्तव्यः।

अनवच्छिन्नं च चैतन्यं न विषयसमवेतं, न वा प्रमाणजन्यम्। अतो वृत्त्युपाधिनैव विषयाश्रितं मानफलं, न तु स्वतः। *

* स्वप्रकाशे मानफले स्वतोऽन्यतो वोत्पत्त्यादेरसिद्धेर्जडधर्मस्य रूपादिवत् जडत्वनियमात् तस्य प्रमेयनिष्ठत्वायोगात् स्वाभिव्यञ्जकवृत्तितादात्म्यात्तद्द्वारा प्रमातृनिष्ठत्वमेवाहमुपलभ इत्याद्यनुभवानुरोधात्।

शंकाः—तर्हि प्रमातुरेव स्वनिष्ठसंवेदनेन सर्वसाधकत्वसंभवात् किं तदतिरिक्तसाक्षिणा।

उत्तरः—मातृमानादौ मातृमानान्तरासम्भवात् स्वस्य स्वास्मिन् वृत्तिविरोधात् तत्साधकं वस्तुतः स्वतन्त्रं नित्यमेकं मानफलत्वादिकल्पनारहितं स्वप्रकाशं संवेदनं सर्वसाक्षिभूतमुपेयम्।

# क्रोडपत्रः ।

## स्वरूपसम्बन्धखण्डनं ।

स्वरूपसम्बन्धस्यैव दुर्निरूपत्वात् । संवंधांतरमंतरा विशिष्टप्रत्यय-विषयत्वमेव स इति चेत् । न तावत् स्वस्यैव प्रत्ययस्य स्वयं विषयो भवति वेद्यज्ञानस्य तदयोगात् । नापि ज्ञानान्तरस्य, तत्पूर्वं ज्ञेयेना-संवंधप्रसंगात् तदा स्वस्याभावेन विषयत्वायोगात् । नह्यस्वमपि ज्ञान-विषयो भवति, स्वप्रकाशज्ञानमपि नास्याविषयमित्युक्तं । किंचानुव्यव-सायस्यैवाभावान्न तद्विषयत्वमनुव्यवसायहीनज्ञानस्यासंवंधप्रसंगाच्च । नहि ज्ञानेऽनुव्यवसायानियमोस्ति । तस्यापि तद्योग्यत्वमस्त्विति चेन्न घटविषयज्ञानत्वेन तद्योग्यत्वे विषयत्वयोग्यतैव संवंधं विना दुर्निरूपा, निर्विषयं च ज्ञानं नानुव्यवसायविषयतायोग्यं तस्य कदापि तददर्श-नात् । किंच विशिष्टज्ञानत्वं विशेषणविशेष्यवैशिष्ट्यविषयज्ञानत्वं, वैशिष्ट्यं च ज्ञानज्ञेययोः विशिष्टज्ञानविषयत्वमित्यात्माश्रयः ।

अपि चैतत् स्वरूपसम्वन्धः किं स्वरूपद्वयातिरिक्तस्तदेव वा । नाद्यः । द्रव्यगुणाद्यन्यतरत्वासंभवात् । नचौपाधिकसामान्यमेव स्वरू-पसम्वन्धः । न चोपाधेर्दुर्निरूपत्वमखण्डधर्मस्य कस्यचित्तत्वादिति वाच्यं । तस्यैव ज्ञानेनासंवन्धप्रसंगात्तस्य तदवृत्तित्वात् । न च तत् केवलान्वयी, केवलान्वय्यसंवन्धस्योक्तत्वात् । किंच तस्यैकत्वे तव समवायो न स्यात्, तदनुमानस्यैतद्विषयत्वात् तदन्यप्रमाणस्याभावात्, नित्यातीन्द्रियेप्यपरोक्षज्ञानविषयता घटादिज्ञानात् पटादिव्यवहारश्च

स्यात् । प्रतिपदार्थं भिन्नत्वे चानित्यमात्रवृत्तिधर्मस्यानित्यत्वनियमेन रूपादौ तदभावप्रसंगात्, नित्यत्वेपि तत्र वृत्तिसंबंधानंत्यप्रसंगो जातिविलोपप्रसंगश्च, नित्याखण्डधर्ममात्रस्य समवेतत्वादन्यथा तस्याऽपि तदयोगात् । नचाभावत्वादिकमखण्डमपि न समवेतमिति वाच्यं । ( संप्रतिपन्नैः द्वैविध्यप्रमाणमस्ति )? न च समवेताखण्डोधर्मो जातिरुपाधिर्न तथेति वाच्यं । अखण्डधर्ममात्रस्य समवेतत्वात् । नाप्यस्याभावे ऽन्तर्भावः प्रतियोगिनोऽनिरूपणात् । न द्वितीयः । संबन्धत्वायोगात् । संबंधिद्वयाश्रयस्य संबन्धत्वादन्यथा ऽविशिष्टव्यावृत्तरूपाभावे ज्ञानज्ञेययोः संबन्धित्वासंभवात् ।

किंचाविशिष्टव्यावृत्तविशिष्टधीजनकत्वं हि संबंधित्वमिति त्वयेष्यते । नच स्वरूपद्वयमात्रमेकस्वरूपं दाऽविशिष्टव्यावृत्तं...किंत्वेवं देवदत्ते ज्ञानं घटं च पश्यतस्तज्ज्ञाने घटीयत्वसंदेहो न स्यात् तदुभयात्मकसंबन्धस्य निश्चितत्वादपिच घटज्ञाने विश्वमात्रं प्रतीयात् स्वरूपद्वयात्मकसम्बन्धस्य सर्वत्र सत्वात् । घटतद्ज्ञानस्वरूपद्वयमेव संबन्ध इति चेत् । न । ज्ञाने घटविषयत्वव्यतिरेकेण घटीयत्वाभावेन घटज्ञानमिति व्यवहारायोगात्, घटजन्यत्वस्यापि तस्मिन् घटीयत्वेनैव ग्राह्यत्वात् । नचैतद्ज्ञानं घटश्च तत्संबंधः, एतत्वं च ज्ञाने पटज्ञानादिव्यावृत्तव्यक्तिविशेष एव, एवं तत्तज्ज्ञानं पटादिश्च संबन्ध इति वाच्यं । व्यक्त्यंतरे तदभावप्रसंगात् । ज्ञाने पटीयत्वस्यापि दुर्निरूपतया पटादिज्ञानव्यावृत्तत्वेन ज्ञानासंभवात्, तस्य दुर्विज्ञेयत्वाच्च । अपि चैवमिष्टानिष्टसमूहालम्बनादनिष्टेप्युपादानरूपाप्रवृत्तिः स्यात् तत्संगोगादिजन्यत्वमपि स्यात् स्वरूपातिरिक्त॰जन्यत्वाभावेन तस्मि-

न्नानाधर्मनिरूपितानेकजन्यत्वासंभवे तस्मिन्ननेकसन्निकर्षजत्वासंभवात् तदुभयसंबंधिज्ञानव्यक्तेरेकत्वेन तस्यास्तदुभयस्वरूपसंबंधत्वात्, भेदाग्रहस्य च प्रवृत्तौ साक्षाद्धेतुत्वांगीकारे जितमविवेकितेत्युक्तम्। इष्टाकारज्ञानविषयत्वस्यैव लाघवेन प्रवृत्तिविषयत्वे प्रयोजकत्वं। (ननु यत्रेष्टतावच्छेदकवैशिष्ट्यं विषयीकरोतीत्यस्य यदिति तस्य प्रवृत्तिविषयत्वं गौरवात् रजतभिदभ्रमादप्रवृत्तिप्रसंगाच्चेत्युक्तं)? किंच यत्रेष्टतावच्छेदकवैशिष्ट्यं विषयीकरोतीत्यस्य यदि तादृशज्ञानविषयत्वमर्थस्तदातिप्रसंगस्तदवस्थ एव, यदि प्रकारीभवदिष्टतावच्छेदकवैशिष्ट्याश्रयत्वं तदापि स एव। इष्टज्ञानांशस्यानिष्टं विषयो न भवतीति चेन्न। ज्ञाने स्वतोंशभेदाभावात्। विषयभेदादंशभेद इति चेत्। एकांशेनोभयाविषयत्वे तदयोगेनांशभेदेन विषयसम्बन्धसिद्धौ तत्प्रयुक्तांशभेदो ज्ञाने सिध्यति, सिद्धे च तस्मिन्नसंकीर्णविषयसम्बन्धासिद्धिरित्यन्योन्याश्रयः। तस्मान्नस्वरूपसम्बन्धेन विषयविषयिभावव्यवस्था युज्यते। अपिचैवमनुमेयव्यावृत्तेः प्रत्यक्षविषये संबन्धो वाच्यो ऽन्यथा तस्यापरोक्षत्वायोगादपरोक्षज्ञानविषयत्वेन विषयापरोक्षत्वस्यासंभवात्, तस्यैव तत्प्रयोज्यत्वात् तस्मान्नापरोक्षज्ञानविषययोः स्वरूपसम्बन्धः।

(नृसिंहाश्रमविरचित विवरणभावप्रकाशिका
=पञ्चपादिकाविवरणभाष्यम्।)

## ( छ ) आत्माहंकारविवेकः—

यदि दृग्रूपात्मैवाहंकारः स्यात्तर्हि सर्वगतदृग्रूपात्मना सर्वस्य संबन्धात्तस्य युगपज्ज्ञानं स्यान्नवा किञ्चित् प्रकाशेताविशेषात्। अतस्तदाकारवृत्तिसहकृत चैतन्यमवभासकं वाच्यं। सा च न निरवयवस्यात्मनः परिणाम इति तत्परिणामी कश्चिद्वाच्यः, स चाहंकार एव, अहं जानामि मयि ज्ञानमित्यनुभवादतो न स्वप्रकाशात्मैवाहंकारः।

आत्मा यद्यहंकारतावन्मात्रः स्यात्तदा सुषुप्त्यादावात्मनि प्रतीयमानेऽहंकारोऽपि प्रतीयेत। ननु तद्विषयानुभवाभावान्नाहंकारः प्रतीयत इति चेत्तर्हि तदभिन्नात्मापि न प्रतीयेत। स च प्रतीयत एव, उत्थितस्य परामर्शात्। नन्वहंकारोपि स्वापादौ प्रतीयत एव, तस्य स्वप्रकाशचैतन्यात्मत्वादिति चेत्तर्हि कदाचिदहमित्यभिमन्यमानोऽस्वाप्समिति स्मृतिरापद्येत। ननु सुखमहमस्वाप्समिति स्वापकालीनसुखानुभवितृत्वेनाहंकारोपि स्मर्यत इति चेन्न, तस्य प्रत्ययस्य स्थविरोहं बाल्ये पितरावन्वभूवमित्यत्र स्थाविर्यवदहंकारस्य तदानीं स्मर्त्रवच्छेदकत्वविषयत्वेनोपपत्तेरन्यथा ह्यस्तनाहंकार इव पूर्वोक्तानुसन्धानापत्तिप्रसंगात्।

किम् सुषुप्तावहंकारानुभवस्तत्कालीनाहमित्यनुभवबलात् कल्प्यते उत्थितस्याहंकारस्मृत्या वा। नाद्यः। तदा कस्यापि तथानुभवानुपलम्भादन्यथा तस्य स्मरणमपि कदाचित् स्यात्। न द्वितीयः। अहंकारस्य तदा स्मर्तृकोटित्वेन तथास्मरणसम्भवान्न तस्य स्मृतिविषयत्वं कल्पयितुं शक्यं येन सुषुप्तौ तदनुभवः कल्प्येत। नन्वहंकारे

स्मृत्यविषयत्वस्यापि निश्चेतुमशक्यतया संदिग्धासिद्धो हेतुरिति चेत्। न। अहंकारस्य जाग्रतीव स्वापेप्युनुभवे तदनुभवस्याप्यवश्यानुभवतया कदाचिदहामित्याभिप्रेत्यमान एवास्वाप्सामिति स्मृतिप्रसंगेन तदभावस्य निश्चितत्वात्। अतएव सुषुप्तौ प्रकाशमानस्यात्मनस्तदानीमप्रकाशमानाहंकाराभेदायोगात्।

अहंबुद्धेर्न शरीरं विषयः, तद्भेदेपि तदनुवृत्तेः। नापि केवलात्माऽविद्या वा तद्विषयः, स्वापेपि तत् प्रसंगात्। अतः सुषुप्तावसन् स्वप्नादौ संश्च किञ्चित् तद्विषय, इति स एवाहंकारः। एवं बुद्ध्यादयः क्वचिदाश्रिताः कार्यत्वात् संमतवत्। न च तदाश्रयः पृथिव्यादि; नाप्यात्मा, निरंशचैतन्ये हेतुसंबंधाभावेन बुद्ध्यादिपरिणामायोगात्, बुद्ध्यादेर्यावदात्मव्यापित्वप्रसंगाच्च। तदधिकरण एव तदत्यन्ताभावानुपपत्तेः। तस्मादन्तःकरणमेव तदाश्रयः।

किंचाहामिति पराग्व्यावृत्तौ ज्ञानाश्रयोऽहंकारोऽनुभूयते। चैतन्यं तु घटः स्फुरति पटः स्फुरत्यहं स्फुरामीति चाहंकार पदवाच्यपि सर्वत्रानुवृत्ततया प्रतीयते, स्फुरणस्यैव चैतन्यत्वात्। चैतन्यं चात्मेति साधितं। तत्र कथमनुवृत्तचैतन्यात्मरूपत्वं व्यावृत्ताहंकारस्य स्यात (नाहं घटः इति व्यावृत्तिरहंकाराकारः) व्यावृत्तानुवृत्तयोरेकत्वायोगात्। ×

---

× शंकाः—न वृत्तिस्फुरणयोर्भेदः। स्फुरणं नामोपलब्धिः बुद्ध्याद्यभेदः। बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इत्यनर्थान्तरमित्यक्षपादोक्तेः।

उत्तरः—न। देवदत्तो जानाति घटः स्फुरतीति तयोर्भिन्नाश्रयत्वेनानुभूयमानयोरेकत्वायोगात्, प्रमातृप्रमेययोर्भिन्नत्वात्तत्तादात्म्येन प्रतीयमानयोरभेदायो-

गात् । नहि प्रमातृधर्मस्य ज्ञानस्य प्रमेयतादात्म्यं संगच्छते सुखादौ तददर्शनात्। नच द्वित्वादिवदुभयसम्बन्धित्वमुपपद्यत इति वाच्यम् । तर्ह्युभयत्रोभयसम्बन्ध-प्रतीतिः स्यात् । अभेदे वा देवदत्तो घटं जानातीतिवद्देवदत्तो घटं स्फुरतीति, घटः स्फुरतीतिवत् घटो जानातीति च प्रत्ययप्रयोगयोरापत्तेः । अतएवाक्षपा-दवचनमनुपादेयम् ।

शंकाः—जानातीति ज्ञानाश्रयत्वमनुभूयते घटः स्फुरतीति च ज्ञानविषयत्वम्, अतो न स्फुरणज्ञानयोर्भेदो, न वा प्रतीतिवैपरीत्यम् । घटः स्फुरतीति न स्फुर-णतादात्म्यं प्रतीयते किंतु प्रमातृधर्मस्फुरणविषयत्वं घटस्य, तथा च नोक्तदोषः।

उत्तरः—न। घटमहं जानामीत्यनुभूयमानज्ञानात् पृथगेव स मे घटः स्फुर-तीति स्फुरणस्यानुभूयमानत्वात् । सकर्मत्वाकर्मकत्वलक्षणविरुद्धधर्मवत्तयानुभूय-मानत्वान्न तयोरभेदः ।

शंका:—घटं जानामीत्यर्थविशेषणं ज्ञानमात्मन्यनुभूयते, घटःस्फुरति ज्ञान-विषयो भवतीति ज्ञानोपसर्जनोऽर्थः प्रतीयत इति विशेषणविशेष्यभाव एव परं भिद्यते न त्वनुभवयोर्विषयभेदः । घटः स्फुरतीति सकर्मकज्ञानस्यैवानुभूयमाना-त्वान्नोक्तवैधर्म्यम् ।

उत्तर—न । स्फुरतीति स्फुरणानुभवस्य तदुपसर्जनतया शब्दवद् व्याख्या-नानर्हत्वात् । घटश्चलतीतिवत् घटःस्फुरतीति तादात्म्यप्रतीतेर्नेदं व्याख्यानमुचितं शब्दस्यैव लक्षणादिवृत्त्यार्थान्तरस्य सम्भवात् ।

किंच स्वोपसर्जनमर्थं स्वयं विषयीकरोति ज्ञानान्तरोपसर्जनं वा । (= व्यव-सायतद्गतज्ञानविषयो भवतीति व्याख्यानेऽपि यद्ज्ञानं प्रति विषयो घटस्तेनैव घटे स्वविषयत्वं गृह्यते किंवा ज्ञानान्तरेण ) । नाद्यः वेद्यज्ञानवादे स्वस्य स्वविषय-त्वानुपपत्तेः । न द्वितीयः व्यवसायानुपनीतस्य तद्विषयत्वस्यानुव्यवसाये भाना-योगात् । व्यवसायतद्गतधर्मव्यतिरिक्तस्य व्यवसायविषयकत्वस्यैवानुव्यवसायत्वा-द्व्यवसायविषयकत्वस्य च व्यवसायाविषयत्वान्न तस्यानुव्यवसायविषयतेत्यर्थः ।

शंका:—अस्तु तर्हि स्वप्रकाशवादिमते स्वविषयत्वस्य स्वेनैव ग्रहणं ।

तस्मादहंकारस्य चैतन्यकर्मत्वात् चैतन्यव्यावृत्तत्वात् चैतन्ये प्रतीयमानेप्यप्रतयिमानत्वादित्यादि न्यायादात्मान्यत्वमेव ।

तर्हि कथं भिन्नयोरात्माहंकारयोरेकत्वानुभवः, घटादिवत्तद्गतरूपादिवच्चाहंकार तद्धर्मावात्मनः सकाशात् किमिति पृथङ्नानुभूयेत इति चेत् शरीरैक्याभिमानवत्, मिथ्यातादात्म्याध्यासादेकत्वावगम इत्यवेहि । +

---

उत्तरः—स्वसम्वेद्यज्ञानवादेऽपि किमुपसर्जनं ज्ञानं ज्ञेयेन सहैव स्वात्मानं विषयीकरोति, किंवा प्रथमं स्वात्मानं विषयीकृत्य ज्ञेयं विषयीकरोति । नाद्यः विशेषणज्ञानतत्सन्निकर्षयोःप्रथमं वक्तव्यत्वात् । विशेषणभूतज्ञानस्यैव विशिष्टज्ञानत्वं तस्य तज्ज्ञानतत्सन्निकर्षजन्यत्वायोगात् । (=स्वस्यैव विशेषणज्ञानत्वाद्विशिष्टज्ञानत्वाच्च न पूर्वं तत्संभवः) । अतएव न द्वितीयः । विशेषणज्ञानविशिष्टज्ञानयोरेकत्वादेव पूर्वं विशेषणज्ञानाभावात् क्रमपक्षोप्यनुपपन्नः। बुद्धेर्विरम्यव्यापारानुपपत्तेश्च (शब्दबुद्ध्यादीनां जन्मातिरिक्तव्यापाराभावेन क्रमेण विषयसम्बन्धो न संभवति)। सकर्मकाकर्मकयोर्ज्ञानस्फुरणयोरभेदासम्भवात् । ज्ञानेन स्फुरतीति भेदानुभवाच्च ।

+ आत्मनः स्वसत्तायां प्रकाशमानत्वं तावदव्यभिचरितमन्यथा तस्मिन्संदेहविपर्ययाज्ञानानामपि प्रसंगात् । न ह्यात्मसत्तायां कस्यचित्कदाचित्संदेहादि संभवति संदेहादेरसाक्षिकत्वायोगात्तत्साक्षिण एवाऽऽत्मत्वात्तस्यानवभासे संदेहादेरेवासिद्धेः स्वतः प्रकाशमान एव सर्वदाऽऽत्मेति स्थितेः आत्मन्यवभासमानेऽपि सुषुप्त्यादावहमवभासव्यभिचारादागन्तुक आत्मन्यहमवभासोऽन्योपरागनिबन्धन इति निश्चियते। ततश्चाऽऽगमापायवत्त्वादहंकारो नाऽऽत्मा तदवधितया तदधिष्ठानतया चानुगतः सद्रूप आत्मा । एवमहंकार आत्मान्यत्वे सत्यन्यावभास्यस्तदवभासकतया तस्मिन्स्फुरणरूपेणानुगत आत्मा तथा कर्तृत्वभोक्तृत्वप्रमातृत्वादिविक्रियावानहंकारस्तद्द्रष्टा चाऽऽत्मेति । तदेवं द्रष्टृदृश्यभावेन साक्ष्यसाक्षिभावेनाऽऽगमापायितदवधित्वेन चाऽऽत्माहंकारयोर्विवेके सति विरुद्धस्वभावयोस्तयोरेकत्वावभासोऽन्योन्याध्यासनिबन्धनशुक्तीदमंशरजतयोरिवेत्यभिप्रायः ।

# द्वितीयाध्यायः ।

## अध्यासवादः । *

न तावदात्मनि कर्तृत्वादिः स्वाभाविकः संभवति तथासति चैतन्यसुखादिवत् सदैवात्मनि सत्वप्रसंगात् । नहि सुषुप्तावात्मनि प्रमातृत्वाद्यस्ति तत्र प्रमेयाभावेन प्रमाणप्रवृत्त्यभावे प्रमातृत्वानुपपत्तेः । एवं कार्याभावात् करणकर्तृत्वयोरभावः तथा भोग्याभावात् भोगभोक्तृत्वयोरभावः । यदि सुषुप्त्यादावपि प्रमातृत्वादि भवेत्तदा ह्यस्तनप्रमातृत्वादिवदिदमज्ञासिषमिदमकार्षमिदमभुंजिषमीति स्मर्येत, न तु स्मर्यते, तस्मान्न स्वाभाविकमात्मनि प्रमातृत्वादिकं । आगन्तुकं पुनरिदं विचारणीयं, आत्महेतुकमनात्महेतुकं निर्हेतुकंवेति । तत्राद्ये किं स्वयमेवात्मा प्रमात्राद्यात्मना परिणमते हेतूपरागाद्वा । नाद्यः, सदा परिणामप्रसंगात् सुषुप्त्याद्यभावप्रसंगः, स्वतंत्रस्य प्रवृत्तेर्निरंकुशत्वात् । न द्वितीयो, ऽसंगस्यात्मनस्तदयोगात् निरवयवकूटस्थरूपत्वाच्चात्मनः स्वतः परतो वा परिणामासंभवात् । किंच हेतुसंबन्धस्यात्मनि नित्यत्वे नित्यपरिणामप्रसंगः, तस्यानित्यत्वे तत्रापि हेत्वन्तरापेक्षा स्यात् तथाचानवस्था प्रसज्येत । तस्मान्नात्महेतुकः प्रमातृत्वादिपरिणामः । नाप्यनात्महेतुक इति पक्षः साधुः । अनात्मनोन्तःकरणादेरचेतनस्य प्रमातृत्वाद्यनुपपत्तेः, जडस्य प्रमातृत्वे काष्ठलोष्टादेरपि प्रमातृत्वापत्तिः। अथात्मसान्निध्यादनात्मा वा अनात्मसान्निध्यादात्मा वा प्रमात्राद्याकारेण परिणमत इत्युच्येत, तदसत्, लोष्टादेरपि तत्प्रसंगात्

---

* एतदध्यायगतः परवर्त्यध्यायगतश्च सरलानतिविस्तृतो विचारः रामतीर्थकृत शारीरकशास्त्रार्थसंग्रहादुद्धृतः ।

तदवच्छिन्नात्मनि प्रसंगाद्वा ऽत्मनो व्यापकत्वेन सर्वत्र सदा सन्निधानात्। नापि तृतीयः, सदातनत्वापत्तेः सदाऽभावापत्तेर्वा । नहि निर्हेतुकस्य कादाचित्कत्वे प्रमाणमस्ति । नन्वहं जानामि करोमि भुंजे इति प्रत्यक्षेणैव प्रमातृत्वादेरवगमादहमिति चात्मनोवभासादात्मनि प्रामाणिकं प्रामातृत्वादीति चेत्। मैवं, अहमित्यवभासस्यात्मविषयत्वाभावात् साभासाहंकारविषयत्वात्तस्य । नच तादृशोहंकार एवात्मेति सांप्रतं । तस्यात्मत्वव्यभिचारात्, सुषुप्तावात्मनि भासमानेप्यहमात्मत्वानवभासात् । अवभासे वा ऽवस्थान्तरे कदाचित् स्मर्येत ह्यस्तन इवाहंकारः । स्मर्यत एवाहमस्वाप्समिति चेत् । न, अहमित्यवभासे स्वापव्याघातात् । अहमवभासोहि " मनुष्योहं द्रष्टा श्रोता वक्ता " इत्यादिरूपेण प्रवर्त्तते न केवलमहमिति तथा क्वाप्यदर्शनात् तथावभासेच सुषुप्तिव्याघातः । यदि सुषुप्तावहमित्यात्मा नाभात्तर्हि कथमुत्थितस्याहमस्वाप्समित्युल्लेख इति चेत् । अवस्थान्तरागमने चिदात्मनोहंकारकंचुकप्रवेशादिति वदामः । तथाहि । अशेषविशेषज्ञानहीनावस्था हि सुप्तिरुच्यते । विशेषज्ञानंचेन्द्रियान्तःकरणोपाधिकं । इन्द्रियाणि च तदोपरतानि । तथाच तदा चैतन्यस्य विशेषाकारसमर्पकोपाधीनां विलयान्निर्विशेषचिदात्मावभासः सिद्धः । तत्रच मनसोपि विलयादहमुल्लेखाभावश्च सिद्ध एव। एवं निर्विशेषज्ञानरूपेण सुषुप्तौ स्वयंप्रकाशसिद्ध आत्मा स्वतो विशेषाभावात् स्वाध्यस्तानाद्यनिर्वाच्याविद्याविलसितमंतःकरणं मनोवुद्ध्यहंकारचित्तशब्दैर्व्यवह्रियमाणवृत्तिभेदं प्रथमं प्रविश्य तदभेदेनात्मानं मन्यमानोऽहमित्यात्मानं विशेषतोल्लिख्य प्रागवस्थामनुसंदधानोऽस्वाप्समेतावंतं कालं निवृत्ताशेषविशेषविज्ञानोभूवमिति स्फुटं व्यवहरति। यथा कश्चिद्

ब्राह्मणः स्वगृहे देवदत्तात्मना स्वात्मानमनुभूय यज्ञशालायामाध्वर्यवे कर्माणि नियुक्तस्तत्कर्माभिनिवेशेन अध्वर्युरस्मीति मन्यमानः पूर्वावस्थामनुसंधत्ते एवमयमात्मा ऽवस्थान्तरे स्थितो ऽवस्थान्तरमनुसंदधातीति युज्यते। तस्मादनहंकारस्यात्मनो ऽहंकाराभिनिवेशेनाहमस्वाप्समिति परामर्शो न विरुद्धयते। तस्मादहमुपरागमंतरेणात्मनि प्रमातृत्वाद्यभावात्तस्य चागंतुकत्वादागन्तुकानां च धर्माणां कूटस्थ आत्मनि स्वतः परतो वा वस्तुतोऽसंभवात् परिशेषात् अविद्ययाध्यस्ताहंकारनिबन्धन आत्मनि प्रमातृत्वादिरिति स्थितम्। ÷

## ( अध्यासलक्षणम् )

ननु कोयमध्यासो नाम कथं च स आत्मन्युपपद्यते किंवा प्रमातृत्वादेरध्यस्तत्वे प्रमाणमिति। उच्यते। कारणत्रितयजन्योन्यस्यान्यात्मनावभासोध्यासः। दोषसंप्रयोगसंस्कारा अध्यासं प्रति कारणानि।

---

÷ यस्य यः स्वभावो धर्मो वा भवत्यसौ तस्मिन् सति भवत्येव, अहंरूप आत्मनि विद्यमानेऽपि सुषुप्त्याद्यवस्थासु न भवत्येवातः स्वरूपो धर्मो वा ऽहंकारे न भवति।

शंकाः—कर्तृत्वादेः स्वाभाविकत्वे चैतन्यवत् सर्वदैव सद्भावः स्यादिति ना वाच्यं। कादाचित्कत्वेपि घटलौहित्यवत् स्वाभाविकत्वमुपपद्यते।

उत्तरः—तत्र सावयवपरिणामिवस्तुनो हेतूपरागाद्वास्तवरूपान्तरसंभवात् कादाचित्कत्वेपि स्वाभाविकत्वं, निरवयवकूटस्थात्मनो हेतूपरागासंभवात् तत्र प्रतीयमानकादाचित्कत्वधर्मस्य स्वाभाविकत्वं विरुद्धं। अतः कर्तृत्वादिर्न स्वाभाविकः।

यत्रागन्तुकधर्मयोगः पारमार्थिकस्तत्र धर्मिणमविकृत्य न धर्माविर्भावतिरोभावौ पूर्वरूपे स्थिते तत्र रूपान्तरासम्भवात् पूर्वरूपस्य चाऽऽश्रये विनाशायोगादिति परिणामिनः सावयवस्य द्रव्यस्य स्यादागन्तुकधर्मयोगित्वं पारमार्थिकं न कूटस्थस्य।

दोषोपि करणदोषो विषयदोषः प्रमातृदोष इति त्रिविधः। क्वचिद्दोषाणां समुच्चयः क्वचिन्नेति कार्यवशादवगन्तव्यं। अवभासोध्यास इत्युक्ते चिदात्मावभासेऽतिव्याप्तिरतो 'अन्यात्मना' इति पदं, द्रष्टुरन्यात्मना घटावभासव्यावृत्तये "अन्यस्य" इति पदं। अन्यादृशस्य वस्तुनः स्वविपरीताकारावभासोध्यास इत्युक्तं भवति। तथाच घटापेक्षयान्यस्य पटस्य घटान्यात्मनावभासे लक्षणव्याप्तिर्न्निरस्ता। एवमपि शुक्लःपट इत्यादौ प्रसंगवारणाय 'कारणत्रितयजन्य' इति विशषणम्। अत्राध्यास शब्देन भावकर्मभ्यां ज्ञानाध्यासोर्थाध्यासश्च विवक्षितः तथाच अवभासनमवभासोवभास्यत इत्यवभास इतिचानात्मतदवभासयोरात्मन्यध्यस्तत्वसिद्धिः। यथा शुक्तौ रजततदवभासयोः। तत्र शुक्तौ रजतसारूप्यं विषयदोषो, द्रष्टुर्न्नेत्रगतकाचादिः करणदोषः, तस्यैव रजतरागादिः प्रमातृदोष इति दोषत्रयमस्ति, नयनेन्द्रियसंप्रयोगः पूर्वानुभूतरजतसंस्कारश्च विद्येते इत्यस्ति कारणत्रयजन्यत्वं तटस्थलक्षणं। शुक्त्यात्मना स्थितस्य वस्तुनो रजतात्मनावभासश्च विद्यत इति स्वरूपलक्षणं चास्ति। अयं चान्यस्यान्यात्मनावभासो ऽधिष्ठानारोप्ययोरन्योन्याध्यासो विवक्षितः। सचाविद्यां विना नोपपद्यते। नह्यन्यस्यान्यात्मत्वं पारमार्थिकं संभवति, स्थितस्य नष्टस्य वा तदसंभवात्। तस्मात् सत्यस्यवस्तुनो मिथ्यार्थाकारावभासो मिथ्यार्थस्य च सदाकारावभासोध्यास इति सिद्ध्यति।

### ( अध्यासे पूर्वपक्षः )

नन्वत्र वादिनो विप्रतिपद्यन्ते यतः केचित् इदंरजतमिति ग्रहणस्मरणरूपं ज्ञानद्वयं मन्यन्ते अतोन्यात्मनावभास इत्यनुपपन्नं। अपरे

पुनर्देशान्तरस्थं पूर्वदृष्टमेव दोषवशादिहावभासत इति वदन्ति । अपरे वुद्धिस्थं वहिरिति । अन्ये ऽविद्यावशादसदेव भासत इति । तथाचान्यस्यैवान्यात्मत्वमित्यनुपपन्नं । तथा केचित् सदधिष्ठानं नेच्छन्त्यतोऽन्यस्येत्ययुक्तमिति ।

## ( अख्यातिखण्डनं )

अत्र ज्ञानद्वयपक्षो निर्युक्तिकः । तथाहि ।

पुरःस्थे धावनायोगादविवेकानिरूपणात् ।
स्मृतेः प्रमोषायोगाच्च नाख्यातिरिह संभवेत् ।

अन्यवस्तुसन्निकर्षे सति तस्मिन्नेव यत्तदविविक्तान्याकारं ज्ञानं जायते सा ऽख्यातिरिति न युक्तं । अख्यातिवादिना हि इदमिति रजतमिति च ज्ञानद्वयमिष्यते । तदा रजतार्थिनः पुरोवर्त्तिनि प्रवृत्तिः कस्माज्ज्ञानादिति वक्तव्यं । तत्रेदमिति सामान्याकारज्ञानात्तावन्न प्रवृत्तिः लोष्टादावपि सामान्यतोवगम्यमाने प्रवृत्तिप्रसंगात् । तटस्थरजतस्मरणं चेत् प्रवर्त्तकं तदा तस्य पूरोवर्त्तिविषयत्वाभावाद्रजतार्थिनः पूरोवर्त्तिनि धावनं न युज्यते । एतेन ग्रहणस्मरणे निरंतरोत्पन्ने प्रवर्त्तके इति च निरस्तं, पूरोवर्त्तिनि प्रवृत्तिनियमासिद्धेस्तादवस्थ्यात् । अथाविवेकादन्यार्थिनोप्यन्यत्र प्रवृत्तिरित्युच्येत तदयुक्तं अविवेकस्यैव दुर्न्निरूपत्वात् । न तावत् ज्ञानाभावमात्रमविवेकः, इदमितिरजतमिति च ज्ञानसद्भावात् । अथ स भेदाग्रहः, तत्र वक्तव्यं, स किं गृह्यमाणस्मर्यमाणयोः ग्रहणस्मरणयोर्वा । नाद्यो ऽपुनरुक्त शब्दद्वयस्मृतिहेतुत्वेन विविक्तावभासनादन्यथेदमिति च रजतमिति चापुनरुक्तशब्दद्वयस्मृत्यनुदये तदुच्चारणव्यवहारो न स्यात्, पिण्ड एव हि दृष्टः सन्

संज्ञां स्मारयितुं क्षम इति न्यायात् । न द्वितीयः, तयोर्भेदाग्रह इदमिति ज्ञानं ग्रहणं रजतमिति ज्ञानं स्मरणमिति प्रत्यवस्थानानुपपत्तेः । अथ यौक्तिकीं दृष्टिमाश्रित्येत्थं व्यवहारो न भ्रान्तपुरुषदृष्टिमिति चेत्, न, भ्रान्तपुरुषस्याप्यपुनरुक्तशब्दद्वयस्मृतिहेतुत्वेन विविक्तार्थद्वयभाने तद्विषयज्ञानयोरपि विविक्तावभासोपपत्तेः । किंच गृह्यमाणाविवेकात् प्रवृत्तिः किंवा स्मर्यमाणाविवेकात् । आद्ये स्मर्यमाणस्य गृह्यमाणाविवेके रजतमपरोक्षं स्यात् । तथाच भ्रान्तित्वापत्तिः । द्वितीये गृह्यमाणस्य स्मर्यमाणाविवेके इदमिति प्रत्यक्षता नानुभूयेत । एवं ग्रहणस्मरणयोरन्योन्याविवेकेपि न्यायो योज्यः । अपिच विवेको नाम भेदः, स च स्वरूपातिरिक्तः प्राभाकरेण नांगीकृतः तथाच स्वरूपस्फुरणमेव भेदस्फुरणमिति तस्मिन् सति न भेदाग्रहसिद्धिरिति । तथा प्रकृतं रजतज्ञानं स्मरणमित्यपि न संजाघटीति । स्मरणत्वे गंगादिस्मरणवत् स्वार्थं विविच्य गृह्यमाणाद्दर्शयेत् । दोषवशात् तत्तांशस्य प्रमुष्टत्वान्न विविच्य दर्शयतीति चेत्, न, स्मृतेरंशाभावात् । ननु विषयस्य सांशत्वात्तत्स्मृतिः सांशोच्यते, विषये च स्वावच्छेदकौ देशकालावंशौ, तत्र पूर्वानुभवसंस्कारजन्यायाः स्मृतेः केनापि निमित्तेनोक्तांशप्रमोषात् तमंशं विहाय पूर्वानुभूतवस्तुस्वरूपमात्रमवगाहत इति स्मृतेरविवेचकत्वसिद्धिरिति चेत् । न, देशकालयोरर्थांशत्वासंभवात् । नहि यस्मिन् देशे काले च योर्थोनुभूतः स तदंशवानिति वक्तुं पार्यते, देशकालयोरर्थव्यभिचारादर्थस्य च देशकालव्यभिचारादंशांशित्वे च तदयोगात् । अथ पूर्वानुभूतत्वं विषयांशस्तत्ता, तत्प्रमोषादविवेचकत्वं स्मरणस्येति चेत् । तदपि न । अनुभूतत्वं नाम अनुभवव्याप्तत्वं तच्च न

पूर्वानुभवेन विषयीकृतं, स्वस्य स्वविषयत्वायोगात्, तथाच वस्तुमात्रं पूर्वानुभवविषयः तज्जन्यसंस्कारद्वारकं स्मरणमपि वस्तुमात्रविषयमिति न तस्यांशांतरमस्ति यस्य दोषात् प्रमोषः कल्प्येत। नन्वेवं सति सा गंगा मया दृष्टेति कथं स्मरणाकारोल्लेख इति चेत्। उच्यते। गंगानुभवाद्भिन्नो देशकालानुभवस्तत्संस्कारात्तत्स्मृतिर्न्नार्थानुभवादन्यथा क्वचिदर्थस्वरूपस्मरणेपि कुत्र कदा दृष्टं मयेति विमर्शो न स्यात्। तथार्थानुभवानंतरं मयेदं विदितमिति ज्ञातृज्ञेयज्ञानावगाहि यज्ज्ञानमुत्पद्यते तत्संस्कारजन्यास्मृतिरर्थस्यानुभूतत्वं गमयति, अर्थानुभवश्चार्थस्मृतिमेवं च सति संस्कारत्रयस्य युगपदुद्बोधकसंभवे सा गंगा मया दृष्टेति स्मृतिरुत्पद्यते अन्यतरसंस्कारस्योद्बोधे ऽन्यतरस्यैव स्मृतिः कदाचिद्विमर्शदर्शनात्। तस्मात् स्मृतेरंशतः प्रमोषासंभवात् स्मृतिश्चेदिदं रजतज्ञानं तदा गंगादिस्मृतिवत् स्वार्थं गृह्यमाणात् विविच्यात्, न विविनक्तीत्यतो न स्मृतिः। तदेवमख्यातिपक्षो दुर्युक्तिक इत्युपेक्षणीयः।

**( अन्यथाख्यातिखण्डनं )**

तथान्यथाख्यातिपक्षोपि। तथाहि।

अत्रान्यत्रसतोज्ञाने हेत्वभावात्....

तत्सत्वकल्पकाभावाद्धीमिथ्यात्वानिरूपणात्।

अन्यत्रसतः पूर्वदृष्टस्य रजतादेरत्र पुरोवर्तिशुक्त्यादावनुभवोन्यथाख्यातिरिति हि तद्वादिनो वदन्ति, तद्दुर्घटमिव प्रतिभाति। देशान्तरानुभूतस्य तत्रैव सतो देशान्तरे प्रत्यक्षेणानुभवे हेत्वसंभवात्। न तावदिन्द्रियेण तद्ग्रहणं संभवति तस्य तेनासंनिकर्षात्। दोषसहकारिविशेषात् सन्निकृष्यत इति चेन्नातिप्रसंगात्, मृतपुत्रादेरपि क्वचित्

भ्रान्त्योरलंभात् तस्मिन्नतीते तत्कालसन्निकर्षाभावाच्च । व्यवहितसन्निकर्षे च तत्ररजतमिति स्यान्नेदं रजतमिति । नाप्यनुमानादिना तद्ग्रहस्तदास्य परोक्षत्वापत्तेः, इहदृश्यमानस्य देशान्तरस्थत्वे लिंगाद्यदर्शनाच्च । अथात्यन्तासतोऽननुभूतस्य च भ्रान्त्यसंभवात् क्वचिदनुभूतसत्वमन्तरेणेहदर्शनानुपपत्तिरन्यत्रसत्वकल्पिकेति चेत, तन्न । इहप्रतीयमानस्येहैव सत्वापेक्षणात् । नहि देशान्तरसत्वमन्तरेणेहप्रतीत्यसंभवस्तथासति सर्वपदार्थानां पुरोदेशे प्रतीयमानानामपि देशान्तरे सत्वं कल्प्येत । अथ तदिदं रजतमिति क्वचिद् भ्रान्तस्य प्रत्यभिज्ञादर्शनात् पूर्वदृष्टमेवेदं दृश्यत इति कल्प्यत इति चेत् । न, परिलूनपुनर्जात कुंतलकलाप इव प्रत्यभिज्ञायाः सादृश्यनिबन्धनत्वात् । तस्मादिहप्रतीत्यन्यथानुपपत्तिर्न देशान्तरसत्वसाधिका । अथेहबाधान्यथानुपपत्तिस्तत्कल्पिकेति मतं तदप्यसत् । इहबाधस्य देशान्तरसत्वकल्पने सामर्थ्याभावात् । नन्वत्यन्तासतः शशशृंगादेः प्रत्यक्षप्रतीत्यसंभवादिह च रजतस्य तथाप्रतीतेः क्वचित्सत्वेन भवितव्यं तदिहोत्तरकालं नेदंरजतमिति बाधविरोधादिहसत्वं न संभवत्यर्थाद्देशान्तरे सत्वमस्य सिद्ध्यतीति चेत् । मैवं । देशान्तरसत्वमन्तरेणेहबाधानुपपत्यभावात् । प्रसक्तिप्रतिषेधात्मा हि बाधो यत्र भवति तत्रैव स निषेध्यप्रसक्तिमपेक्षते न देशान्तरादौ । नहीहनिषिद्ध्यमानस्य घटस्य देशान्तरे सत्वं कल्प्यते । नचात्यन्तासतः कथं प्रसक्तिरिति वाच्यम् । असद्वैलक्षण्यांगीकाराद्रजतस्य यथाप्रतीति सत्ताभ्युपगमाच्च । तस्मादिहनिषेधानुपपत्तिरपि नान्यत्र सत्तां कल्पयेदिति स्थितम् ।

किंचान्यथाख्यातौ ज्ञानस्य मिथ्यात्वं न सिद्ध्यति मिथ्याविषया-

निरूपणात् । नहि स्वरूपेणैव ज्ञानं मिथ्या भवति तस्य त्रैकाल्यनिषे-धागोचरत्वात् किन्तु विषयापहारात् । विषयश्च तवमते रजतं वा पुरोवर्त्तिद्रव्यमात्रं वा तत्संसर्गो वा सर्वोपि सत्य एवेति ज्ञानेन तदपहारासंभवात् । पुरोवर्त्तिद्रव्यरजतयोः सत्यत्वेपि तत्संसर्गो मिथ्या बाध्यत्वादिति चेत् । नैतत्सारं । संसर्गमात्रस्यारोपितत्वेन बाध्यत्वे संसर्गिणोः शुक्तिरूप्ययोरिहैव पृथगुत्तरकालमुपलंभप्रसंगात्, यथा दूरस्थयोर्वनस्पत्योः प्रथममेकत्वेनप्रतिपन्नयोर्निकटोपसर्पणसमये तद्वत् । अपिच स संसर्गः क्वचित् सन्नभ्युपगम्यते न वा। आद्येपि देशान्तरे वा इहैव वा। नाद्यः इहतत्प्रत्यक्षासंभवात्। न द्वितीयो बाधासंभवप्रसंगात् । न चरमोऽसत्ख्यातिप्रवेशापत्तेः । तस्मान्मिथ्यार्थासंभवात् तव ज्ञानमिथ्यात्वासिद्धिः ।

अथ पुरोवर्त्तिन एव शुक्त्यादेर्व्यधिकरणप्रकारकं ज्ञानं मिथ्याज्ञानमिति मतं; तत्र वक्तव्यं कोयं व्यधिकरणप्रकार इति । शुक्तौ रजतत्वमिति चेत्। न, तस्य तत्रासत्वादसत्ख्यातिप्रसंगात्। ननु दोषस्तावदध्यासकारणं सच शुक्त्यादौ रजतादिसादृश्यं तेन च पूर्वरजतदर्शनसंस्कारोद्बोधे सति रजतं स्मर्यते तच्च स्मर्यमाणं दोषवशात् पूर्वदृष्टत्वाकारेण नावभासते किन्तु स्वरूपेणैव । तथा दोषसामर्थ्यादेव पुरोवर्त्तिवस्तु स्वगतेन विशेषेण नावभासते किन्तु सामान्येनैव । विशेषसंसर्गज्ञानमन्तरेण च विशिष्टव्यवहारासिद्धिरतः स्वरूपेण स्मर्यमाणरजतधर्मासंसर्गाग्रहात् सन्निकृष्टपुरोवर्त्तिवस्तुरजतमिदमिति समारोपेण विशिष्टव्यवहारास्पदं जायते, तथाचानया प्रणालिकया भवति पुरोवर्तिनि रजतत्वप्रकारकं ज्ञानमिति । नैतद्युक्त । स्मर्यमाणत्वे रजतस्य स्मृतेः प्रमोषाभावस्याख्यातिनिराकरणावसरे प्रतिपादितत्वात्

स्वार्थविवेचकत्वापत्तौ तस्य पुरोवर्त्तिनाऽसंसर्गाग्रहासिद्धेः। पुरोवर्त्तिनश्च वस्तुनः स्वगतविशेषेणैव वक्ष्यमाणेन विशिष्टव्यवहारास्पदत्वोपपत्तौ व्यधिकरणधर्मावच्छेदकल्पनानवकाशात् । किंच विशेषणीभूत स्मर्यमाणरजतत्वस्य विशेष्यभूत सन्निकृष्टवस्तुनश्चासंसर्गाग्रहमात्राद्विशिष्टव्यवहार उपेयते किंवा तयोः संसर्गादपि । आद्ये गुरुमतप्रवेशापत्तिः । द्वितीये तयोः संसर्गः स्वरूपसन्नेव व्यवहारहेतुः ज्ञायमानो वा। नाद्यः तस्यासत्वादातिप्रसंगाच्च । नहि चक्षुःसन्निकृष्टे घटे विद्यमानोपि गुरुत्वादिर्विशेषणीभूय भासते । न द्वितीयः तत्ज्ञानहेत्वभावस्योपपादितत्वात् । अथ स्मृत्युपनीत विशेषणसंसृष्टतया विशिष्टाकारप्रत्यक्षतोपपत्तिर्ज्ञानलक्षणप्रत्यासत्तेरंगीकारादिति चेत् । न, अतिप्रसंगात् अवगतगुरुत्वविशिष्टतया घटादेरपरोक्षत्वप्रसंगात् । भवतु वा क्वचित् ज्ञानलक्षणापि प्रत्यासत्तिः सात्विह न संगच्छते चन्दने सौरभ्यवत् पुरोवर्त्तिनि तत्सजातीये वा भूतभविष्यतवर्त्तमानकालेषु रजतत्वस्यागृहीतत्वात् अगृहीतस्य च स्मृत्युपनीतत्वायोगात् । शुक्तिसंसर्गित्वेनागृहीतत्वेपि रजतत्वस्येदंतासंसर्गिता गृहीतैवेतीह स्मृत्युपनयोपपत्तिरिति चेत्। सत्यं, तस्य पूर्वगृहीतस्येहासतो ऽपरोक्षत्वानुपपत्तेः उपपत्तौ वा ऽसत्ख्यातिप्रसंगः । नहि विशेष्यासंसृष्टमपि ज्ञानोपनीतं विशिष्टप्रत्ययहेतुरिति क्वचिदुदाहरणमस्ति । तस्मान्मिथ्यार्थानिरूपणाद् व्यधिकरणप्रकारानिरूपणाच्च मिथ्याज्ञानासिद्धिरिति स्थितम् ।

आस्तां तावत् वहिरर्थेन्यथाख्यातिर्यादृशी तादृशी, अहं मनुष्य इत्यादावात्मनि मनुष्यत्वादिविशिष्ट देहाद्यध्यासः कथमिति वक्तव्यं । ननु किमत्र कथं । कस्मिन्नात्मनि को देहोऽध्यस्यत इति पृच्छामः ।

अहमित्यवभासमानेस्मिन्नात्मनि दर्शनस्पर्शनाभ्यां गृह्यमाणोयं देहो ऽध्यस्यत इति चेत् । मैवं, विकल्पासहत्वात् । तथाहि । अस्मदात्मनोन्यत्रायं देहः क्वचिदनुभूतोत्रैव वात्मनि नवानुभूत इति । न चेत्, कथमिहास्याध्यासः पूर्वदृष्टत्वाभावात्, इहैव प्रतीतस्येहाध्यासे परस्पराश्रयात्। आद्येपि किमयमात्मान्तरसंसृष्टतयानुभूतः स्वात्मसंसृष्टतया वा स्वातन्त्र्येण वा । आद्ये स्वयं देवदत्ताभिधानः सन् यज्ञदत्तोहमिति वा व्याघ्रोहमश्वोहमिति वाध्यासमनुभवेत् । द्वितीये कुण्डे बदरवत् भित्तौ चित्रवद्वा स्वात्मनि देहस्याननुभूतत्वान्न तस्य तत्र तादात्म्याध्यासासिद्धिः अनुभवे भेदप्रतीतेरेवाध्यासासंभवः । न तृतीयोऽहंमनुष्यो दीर्घ इत्याद्यात्मनानुभूयमानस्यास्यदेहस्यान्यत्र क्वचिदयं देह इत्यनुभवोभूदित्यत्र प्रमाणाभावात् । अपिच जातमात्रस्यजन्तोर्देहाभिमानदर्शनादन्यथा तस्य देहोपघातलेशमात्रेऽतिरोदनायोगात् तेनास्यपूर्वमननुभवादध्यासाभावप्रसंगः । जन्मान्तरे ऽनुभवादध्यास इति चेत् । सत्यं, तथाप्यध्यस्यमानस्यास्य न पूर्वं दर्शनमभूत्। तस्मादन्यत्रदृष्टमेवान्यत्रारोपणीयमिति नियमासिद्धेरन्यथाख्यातिर्न्नभ्रमः । नन्वन्यस्यान्यात्मना प्रतिभास एवान्यथाख्यातिर्नान्यत्रास्थितस्य दृष्टस्य वान्यत्रावभास इति चेत् । तर्ह्यनिर्वचनीयख्यातेरेवेदं नामान्तरं स्यात्, अविद्यामन्तरेण परमार्थतो न्यस्यान्यात्मनावभासासंभवादिति ।

( आत्मख्यातिखण्डनं )

तथात्मख्यातिवादोपि न युक्तिसहः । तथाहि ।

वस्तुतो बुद्धिरूपत्वं भवेत्प्रत्यक्षतोथवा ।
भ्रान्तगोचररूप्यादेः सर्वथा नोपपद्यते ।

वुद्ध्याकारमेव रजतं वहिर्वदवभासते न पुनर्वहीरजतं यथाप्रतीयमानमस्तीति वदन्नात्मख्यातिवादी प्रष्टव्यो जायते । किं वस्तुगत्या रूप्यस्य वुद्धिरूपतोपेयते प्रतीतितो वा । नान्त्यो वुद्धौ रजतमितिवाहंरजतमिति वानुभवप्रसंगात् । प्रथमेपि रजतमनाद्युत सादि । आद्ये जायमानज्ञानस्वरूपता न स्यात्, ज्ञानं हि क्षणिकवादे नाजायमानमस्ति। अतो विरुद्धधर्मसंसर्गादैकत्रासंभवान्नानादि रजतं । द्वितीये तद्येन ज्ञानेनावभास्यते तस्माज्जायते ज्ञानान्तराद्वा । नाद्यो । ज्ञानज्ञेययोरभेदाभ्युपगम एकस्यैव पौर्वापर्याभावाद्धेतुफलभावायोगात् । भेदाभ्युपगमे च विज्ञानमात्रवादहानात् । द्वितीये ज्ञानान्तरं किं रजतजन्यं तदजन्यं वा ऽन्यदेव वा । रजतजन्यं चेत् स्यात् परस्पराश्रयता । तदजन्यत्वे च तद्ग्राहकत्वानुपपत्तिः । न चरमोन्यज्ञानस्यान्यज्ञानसमये ऽभावात् प्रत्यक्षाविषयतानुपपत्तेः । किंचान्तरं रूप्यं वहिरारोप्यत इत्यभ्युपगम्यते किंवांतरे रजते वहिष्ट्वमारोप्यत इति । यद्याद्य स्तदा वाधकज्ञानोत्पत्तिसमये रजतमिदं न वहिः किंत्वंतरेवेत्येवमाकारता तस्योल्लिख्येत न पुनर्नेदं रजतं मिथ्यैवाभादिति । द्वितीये ऽहंरजतं वहिरिति प्रतीयेत नेदं रजतमिति । वाधकज्ञानेन च वहिष्ट्वमात्रस्यैव वाध्यत्वात् रजतमंतर्व्यवहारयोग्यमवशिष्येत । किंच वहिरारोपे प्रतीयमानस्यांतःसत्यत्वे गुञ्जापुञ्जादौ दहनसमारोपे देहदाहप्रसंगः । तस्मात् युक्त्यसहत्वान्नात्मख्यातिरपि भ्रमः ।

## ( असत्ख्यातिखण्डनं )

अतएव नासत्ख्यातिरपि । तथाहि ।

आपरोक्ष्यादसन्नेदं नानाद्यप्युक्तिबाधतात् ।
न जन्यं कारणाभावान्नासत्ख्यातिस्ततो भ्रमः ॥

इदं रजतमित्यापरोक्ष्यादसतश्च तदयोगान्नेदमसादिति युज्यते। किंचेदमनाद्युत सादि। नाद्यः प्रमाणानिरूपणात्। नहीदानीमिदं रजतमिति व्यवह्रियमाणस्यास्य पूर्वकालसत्वे किञ्चिद् गमकमस्ति। न द्वितीयः कारणासंभवात्। तत्किमसतो जायत उत सतः। नाद्यो ऽसतोऽसज्जन्मनः क्वाप्यनुपलंभात् तत्कल्पनाया अन्धपरंपरात्वात्। न द्वितीयः सतः स्वरूपसतोऽसदुत्पत्त्यसंभवात्। नहि सद् असदाकारेण विक्रियत इति दृष्टान्तोस्ति। नष्टात्सतोऽसदुत्पत्तिरिति चेत्, न, मृतवंध्याया अपि तत्सुतोत्पत्तिप्रसंगात्। तस्मान्नासत्ख्यातिर्भ्रमः।

तथा निरधिष्ठानभ्रमवादोपि दुष्टतरः। उदाहरणाभावात्। केशोण्ड्कादिदर्शनमुदाहरणमस्तीति चेत्। न, तस्यापि तेजोवयवाधिष्ठानत्वात् दर्शनस्यतदन्वयव्यतिरेकानुविधायित्वात्। सर्वभ्रमेषु सन्मात्रस्याव्यभिचारात् तदेवाधिष्ठानमप्रत्याख्येयमस्तीति न क्वापि निरधिष्ठानो भ्रमः समस्ति। एतेन निरवधिकवाधाभावोपि व्याख्यातः। तस्मात् सदसद्विलक्षणं साधिष्ठानं च भ्रान्तिः प्रतिपन्नमिति सिद्धम्।

## ( सदसत्ख्यातिखण्डनं )

ननु प्रत्यक्षोपलंभात् वाध्यमानत्वाच्चेदं यथानुभवं सदसदात्मकमेव किन्नस्यादिति चेत्। न। भ्रान्तिवाधव्यवस्थाऽसिद्धेः। तथाहि। न तावदुभयात्मकस्यैकदेशग्रहणं भ्रान्तिरिति युक्तं तथासति नेदमित्युत्तरस्यापि भ्रान्तित्वप्रसंगात्। अपिच एकदेशग्रहणस्य भ्रमत्व उभयग्रहणात्तद्बाधो वक्तव्यः, सचाशक्य एव, इदं रजतं नेदं रजतमिति च परस्परविरुद्धाकारोभयज्ञानव्यतिरेकेण संकलनात्मकस्य ज्ञानस्य तृतीयस्यानुपलंभात्।

सदसदात्मक परमार्थवस्तुसद्भावे च प्रमाणानिरूपणात्। प्रतीतिवाधान्यथानुपपत्तिः प्रमाणमिति चेत्, न, अन्यथाप्युपपत्तेः। असद्वैलक्षण्यात् प्रतीतिः सद्वैलक्षण्याच्च वाध इति तत्संभवात्। गौरवान्नायंपक्षो युक्त इति चेन्न सदसतो र्वाधप्रत्यक्षयोरसंभवस्योक्तत्वात् तद्विलक्षणयोरेव तत्संभवात्। तवापि प्रतीतिवाधाभ्यां सदसदात्मकं वस्त्वित्यभ्युपगच्छतोऽपरोक्षप्रतीतेरसद्विलक्षणत्वात् सत्वं, वाधात् सद्विलक्षणत्वादसत्वमिति गौरवस्य तादवस्थ्यात्। तस्मान्न सदसदात्मकत्वमपि युक्तिमदिति दिगम्वरमतमप्यसत्।

## ( सिद्धान्तपक्षः ) +

परिशेषादनिर्वचनीयं सर्वप्रकारशून्यं यत्किञ्चिदिदं रजतमिति सिद्धमस्य मायामयत्वं।

---

+ अलौकिकप्रत्यक्षान्यथानुपपत्त्या ज्ञानलक्षणप्रत्यासत्तेरसिद्धेः (तत् परवर्त्ति भागेषु प्रकटिकरिष्यते) न तेन सन्निकर्षेन देशान्तरस्थ रजतादेरिद रजतमिति भ्रमे भानं किन्त्वधिष्ठाने ज्ञायमानानिर्वचनीयरजतादेरेव, निर्विषयज्ञानानभ्युपगमात्। आध्यासिकतादात्म्यस्योत्पत्तेरावश्यकत्वे विनिगमकाभावेन रजतोत्पत्तेरपि युक्तत्वाच्च।

अनिर्वाच्यत्वञ्च सद्विलक्षणत्वे सत्यसद्विलक्षणत्वं। एतच्चार्थापत्तिप्रमाणकं। तथाहि—सच्चेन्न वाध्येत, असच्चेन्न प्रतीयेत, विरोधाच्च न सदसदात्मकमतः सदसद्भिन्नं तस्मात् सिद्धानिर्वचनीयख्यातिः। एतेन भ्रमे ऽसदेव रजतं भाति वासनाविशेषादिति माध्यमिकस्य, सदेवान्तःकरणपरिणामात्मकं भातीति सांख्यादेः, क्षणिकविज्ञानात्मनो विशेषपरिणामो रजतादिरिदंत्वादिना भातीत्यात्मख्यातिवादिनो योगाचारादेः, इदमिति पूरोवर्तिनो ग्रहणं रजतमिति रजतस्य स्मरणं तयोश्च स्वरूपतो विषयतश्च भेदाग्रहाद्विशिष्टव्यवहारो ऽतः प्रवृत्तिश्च इत्यख्यातिवादिनो मीमांसकस्य च मतं परास्तं। आद्यद्वितीययोः ख्यातिवाधानुपपत्तेरेव, तृतीये रजतत्वेन इदंत्वस्य इदन्तेन रजतत्वस्य चारोप इत्यत्र विनिगमकाभावात्, उभयारोपे सदसदादिविकल्पेनोक्तदोषात्, चतुर्थे रजतप्रकारक पुरोवार्तिविशेष्यक ज्ञानत्वेन हेतुतायाः सत्यरजतादिस्थले क्लृप्ताया इह वाधेन हेत्वन्तरकल्पने गौरवात्। परिशेषादनिर्वचनीयख्यातिसिद्धिः।

शंका:—तस्य सदसद्विलक्षणत्वप्रकारेण निर्वचनीयत्वादनिर्वचनीयत्ववाचो रिक्त: ।

उत्तर.—निर्वचनीयधर्मराहित्यमात्रेणैवानिर्वचनीयत्वव्यवहारोवाक्प्रवृत्तेरालम्वनतयाभिप्रेयते न सदसद्विलक्षणत्वप्रकारमपरमाश्रित्य। नहि प्रतीयमानं सर्वं परमार्थतो विद्यमानप्रकारमेव व्यवह्रियत इति नियमोस्ति, अभावादौ व्यवहारदर्शनात् । नह्यभावे कश्चिद्धर्मः संभवति; अस्ति चेत्, स किं भावरूपो ऽभावरूपो वा । आद्ये द्रव्यादीनामन्यतमः स्यात् तथाच तदाश्रयस्याभावत्वव्याहतिः । द्वितीयेपि भूतलादिवदभावाश्रयत्वे भावत्वापत्तिः । नापि भावाभावविलक्षणधर्माश्रयत्वमभावस्य युक्तं तस्यैवानिरुपणात् । तस्माद्यथा भावे कल्पितमभावत्वाद्यादाय तद्व्यवहारस्तथा प्रकृतेपि कल्पितमनिर्वचनीयत्वमादाय तद्व्यवहारः

अधुना उदाहृतेस्तत्वं वस्तुवृत्तेनवर्त्मना कथ्यते । दोषसंप्रयोगसंस्कारपिंडस्तावन्मिथ्यारजतज्ञानोत्पात्तिसामग्रीष्यते । तत्र यद्यपि क्वचित् दोषस्य प्राप्तकार्यप्रसवप्रतिबन्धकतामात्रं दृश्यते यथा शालिवीजस्य तैलमिश्रणं तथापि दावदग्धवेत्रवीजादेर्भस्मकनामव्याधेर्वा कदल्यंकुरोत्पादाहारदाहादिरूपकार्यान्तरहेतुत्वस्यापि दर्शनाद्विपरीतकार्यकरत्वमपि संभावितं, तादिह दोषसामर्थ्यस्य कार्यगम्यत्वादिन्द्रियादिगतदोषाणामपि विपर्ययहेतुत्वमवसीयते । संस्कारमात्रस्य स्मृतिमात्रजनकत्वात् संप्रयोगस्य च केवलस्य सम्यगनुभवजनकत्वात् ताभ्यां विपर्ययानुत्पत्तेः सति दोषविशेषे तदुत्पत्तेरन्वयव्यतिरेकाभ्यां दोषस्य कारणता तावत् सिद्धा। नच दोषस्य संस्कारोद्बोधकत्वेनान्यथासिद्धिः।

दोषावांतरव्यापारत्वात् संस्कारोद्बोधस्य, अन्यथा दण्डस्यापि चक्रभ्रमणेनान्यथासिद्धिप्रसंगात् । तथा पूर्वमदृष्टरजतस्य रजतभ्रमादर्शनात् पूर्वानुभवसंस्कारोपि कारणमन्यथा नरशृंगमपि कदाचित् प्रतीयेत । नच संस्कारस्यानुभवजनकत्वाभावः प्रत्यभिज्ञानादिजनकत्वदर्शनात् । तथा ऐन्द्रियकविभ्रमेष्वधिष्ठानसंप्रयोगमंतरेण भ्रमोदयादर्शनात् सोपि कारणत्वेनेष्टव्यः। तथाच समुद्बुद्धसंस्कारसहकृत दुष्टेन्द्रियशुक्तिसंप्रयोगलक्षणयैकया सामग्र्यैकमिदंज्ञानमुत्पद्यत इदं रजतमिति ।

नन्विदमेकं ज्ञानमिति न निरूपयितुं शक्यते । तथाहि । दुष्टेन्द्रियेण पुरोवर्त्तिवस्तुसंप्रयोगसमनंतरमिदंमात्राकारा तावदंतःकरणवृत्तिरुत्पद्यते । सा न रजतं तत्संसर्गं वा विषयीकर्त्तुमर्हति, इन्द्रियासंप्रयुक्तेर्थे तस्याप्रसरात् प्रागारोपात् पुरोदेशे रजताभावात् तेन संप्रयोगायोगात्, देशान्तरस्थस्यच व्यवधानादेव तदयोग उपपादितः । इन्द्रियान्वयव्यतिरेकयोश्चाधिष्ठानसामान्यज्ञानानुविधायितया तत्रैवोपक्षयादन्यथासिद्धेः, रजतज्ञानस्य स्मृतित्वानभ्युपगमाच्च संस्कारमात्रजन्यत्वाभावात् दोषस्यापि स्वयं ज्ञानहेतुतायाः क्वाप्यदर्शनात् ज्ञानकारणानामेव कदाचित् कार्यविशेषोत्पादे सहकारिमात्रत्वात् । तथाच क्लृप्तानां ज्ञानकारणानामन्यथासिद्धत्वात् कारणांतरस्यादर्शनान्न रजततत्संसृष्ट पुरोवर्त्तिविषयमेकं ज्ञानं संभवति । अतः कथमिदं रजतमित्येकं ज्ञानमुत्पद्यत इति ।

सत्यमेवैतत्तथापीह न स्वतन्त्रं ज्ञानद्वयमिष्यते, अख्यातिनिराकरणात्, इदंरजतमितिसंसृष्टव्यवहारदर्शनात् तद्धेतुभूतं संसर्गज्ञानं तावदेष्टव्यं हेतुफलयोर्ज्ञानव्यवहारयोः समानप्रकारकत्वानियमात् ।

तत्रोक्तरीत्या यद्यपि रजतांशज्ञानस्य साक्षादिन्द्रियजन्यत्वं न संभवति तथापि इन्द्रियसंसृष्टविषय तदाकारांतःकरणवृत्तिवाह्यत्वाभावात् रजत-तत्ज्ञानयोरेकविषयैकज्ञानत्वव्यवहारो न विरुद्ध्यते। उक्तं च टीका-कृता अपरोक्षावभासस्तु संस्कारजन्मनोपि रजतोल्लेखस्य दोषबलादि-न्द्रियज्ञानांतर्भावाच्चेति द्रष्टव्यमिति। प्रागप्येकमेवज्ञानमेकफलं जनय-तीति चोक्तं। तद्विव्रियते। तथाहि। विषयेषु सत्तास्फुरणयोश्चिदात्म-स्वरूपत्वस्य वक्ष्यमाणत्वात् × चिदात्मनि चाविद्याया उपपन्नत्वात् (क्रोडपत्रो द्रष्टव्यः) तदुपजीवनेनेत्थमिह प्रक्रिया प्रवर्त्तते। दुष्टे-न्द्रियपुरोवर्त्तिद्रव्यसंयोगादिदंमात्राकारांतःकरणवृत्तिरुदेति। तत्र भास-मान इदमाकारः पुरोवर्त्तिवस्तुनः सत्ता चिदात्मरूपा। तस्यां साभासे-दमाकारवृत्त्या प्रकाश्यमानायां तन्निष्ठाविद्याशक्ति र्वाह्यदोषनिमित्तका-रणसमवधानापेक्षया क्षोभमुपैति * सा च क्षुब्धा सदृशसंदर्शनरागस-मुद्बुद्धसंस्कारसचिवा सती झटित्येव रूप्याकारा जायते, मणिमंत्रादि-समवधानात् प्रसिद्धमायाया गजाद्याकारवदस्या दोषविशेषसमवधान-सामर्थ्यादस्यचाविद्याविवर्त्तस्य विषयस्य स्वतःसत्ताहीनत्वात् तदभावे

---

× अपरोक्षैकस्वभावं ब्रह्मैव। अभिव्यक्ततदैक्यादेव ज्ञानविषयसाधारणोपरो-क्षव्यवहारः। तदभिव्यक्तिश्च क्वचित् वहिर्विषयावच्छेदेनेन्द्रियजन्य मनोवृत्त्या। विषयानवच्छिन्नस्य स्वत एव। अतएवेन्द्रियजत्वाभावेप्यविद्याहंकाराद्यध्यासे ऽपरोक्षता। क्वचिदन्यहेतुकाभिव्यक्तिक एवाध्यासाद्विषयेऽपरोक्षता। तादिहेद-माकारवृत्त्यभिव्यक्त एव रजताध्यास इति युक्ता ऽपरोक्षता।

* काचादिदोषप्रतिवधेन चाक्षुषशुक्तयाद्याकारवृत्तिप्रातिवधेपदिमाकारवृत्त्या शुक्तयादेः साक्ष्यभेदे तद्भानं तत्र रजताद्यारोपानुपपत्त्या तदावरणस्यावश्यकत्वात्।

च सदिति प्रतीतियोग्यत्वाभावात् स्वाश्रयेदमाकारसत्तया पूर्वोक्तया ऽविविक्ताकारता भवति इदमंशस्य च स्वाभाविकविशेषांशे दोषेण प्रतिबंधात् विशेषाभावे च विशिष्टव्यवहारगोचरत्वायोगादागन्तुना विशेषांशेनाविविक्ताकारता भवति। तथाच सत्यमिथ्यावस्तुद्वयस्योत्पत्तित एवैकतापत्तेरेकत्वं विषयस्य संपन्नं। समीचीनस्थलेपि सामान्यांशविशेषांशयोर्भिन्नयोरेव नित्यमविवेकादेकत्वावभासः, सर्वविषयेष्विदमिति सामान्यांशस्याव्यभिचारात् घटःपट इत्यादि विशेषांशस्य च व्यभिचाराद्वस्तुतोनयोरेकत्वानुपपत्तेरिति। एवमिदमंशरजतांशसंवलनात्मकस्य सत्यमिथ्यात्मनोविषयस्य साक्षिसंसर्गमंतरेणावभासाभावात् साक्षिणश्च वहिरर्थे वृत्तिव्यवधानमन्तरेणावभासकतया संसर्गायोगात् पूर्वोक्तायाः साभासान्तःकरणवृत्तेरिदंमात्राकारतया साक्षिणो रजतावभासात्मतासंपादनसामर्थ्याभावादिदमाकारान्तःकरणवृत्तिप्रतिविम्बितचैतन्यस्थाविद्या दोषोद्बुद्धरजतानुभवसंस्कारसध्रीचीना रूप्यज्ञानाभासाकारेण विवर्त्तते। एषाह्यविद्यावृत्तिरस्याश्च साभासेदमाकारांतःकरणवृत्ते र्वहिःस्वातन्त्र्याभावात् तदनुरक्ततया व्यवहारयोग्यता जायते। + यथायंघट इत्यादौ घटाद्याकारांतःकरणवृत्तिरिदमात्मकसदाकारावभासोपरक्ततया

---

+ "प्रथमं दोषसहितेन्द्रियेणेदंमात्रविषयं ज्ञानमुत्पद्यते तच्चान्तःकरणवृत्तिविषयेष्वेकतया चैतन्यमभिव्यनक्ति तत्र दुष्टकारणजन्यवृत्त्या चैतन्यस्थाविद्या संक्षुभिता रूप्यसंस्कारवशादिदमंशावच्छिन्नचैतन्यस्था रूप्याकारेण विवर्तते रूप्यज्ञानसंस्कारवशात् वृत्त्यवच्छिन्नचैतन्यस्था रूप्यज्ञानाभासाकारेण परिणमते दुष्टकारणजनितवृत्त्युपरमे तदभिव्यक्तचैतन्यापगमात् चैतन्याधिष्ठानं रजतं स्वोपादाने लीयते तादृशज्ञानान्तरे पुनरुत्पद्यत इति।" (ऋजुविवरण)

तदेकात्मना व्यवह्रियते न तयोरप्येकत्वं वास्तवं विषयभेदाद्वृत्तिभेदोपपत्तेः प्रथमाक्षसन्निपात इदमिति साधारणाकारग्रहणे सत्येवानन्तरं विशेषावभासनात् । तथाच सत्यमिथ्याज्ञानद्वयस्यैकतापत्त्या ज्ञानैक्यं संपन्नं । एवं दोषसंक्षुब्धमायाश्रयचैतन्याभिव्यञ्जकवृत्तिसंसृष्ट तादृग्विषयतावच्छिन्नसाक्षिणो विषयस्फूर्तिलक्षणस्यैक्यात् फलैक्यमपि संपन्नं। तदेवमुपपादितया प्रक्रियया विषयैक्यं ज्ञानैक्यं फलैक्यं च सिद्धम् ।+ + एवं च सति सर्वत्राध्यासेषु दोषोद्बुद्धसंस्कारतया संक्षुब्धाविद्यामायादिशब्दवाच्य स्वप्रकाशचिदात्माश्रयानाद्यज्ञानविलासमात्रातिरेकेण न विषयतज्ज्ञाने स्तः तदुभयं च चिदात्मन्येवेति चैतन्यमेव सर्वत्र स्वाविद्यया विवर्त्तत इति युक्तोयं चिदात्मनि प्रमातृत्वादेः प्रपञ्चस्याध्यस्ततासाधने दृष्टान्तः । * * अत्र चेदमंशस्याधिष्ठानात्मनो रजतांशेन

---

+ + इदं रजतमित्यादिभ्रमस्थल इदमाकारवृत्त्यदमंशाज्ञानं निवर्त्तते, शुक्तित्वाज्ञानं तु न निवृत्तमिति रजतोत्पत्तिरिदंज्ञानमुभयं चोपपद्यते। तत्र प्रथमतो अधिष्ठानज्ञानं, तत इदं रजतमिति भ्रमात्मकं । तत्रेदमाकारवृत्तिरनुवर्त्तमाना रजताकारवृत्तिश्चानन्तरमुत्पन्नैकस्यैव चैतन्यस्यावच्छेदिकेति वृत्तिद्वयावच्छिन्नैकज्ञानांगीकारात् भ्रमत्वोपपत्तिः ।

* * अनुपहितेदमंशे रजतादिसंस्कारसहिताविद्यया रजताद्यध्यासवत्, पूर्वपूर्वाहंकारादिवासितानाद्यविद्यया चिदात्मन्यनुपहिते भवत्यहंकाराध्यास इति निरुपाधिकाहंकाराध्यासे दृष्टान्तः शुक्तिरजतादि भवति ।

द्विविधो ह्यध्यासो निरुपाधिकः सोपाधिकश्च। तत्र स्वरूपेण भासमाने ऽप्यनवभासमानयाथात्म्ये वस्तुनि वस्त्वन्तरात्मनाऽवभासो निरुपाधिको यथा शुक्त्यादौ रजताद्यध्यासः । यत्र भासमानेऽपि वस्तुयाथात्म्ये संनिहितोपाधिसामर्थ्यात्करणापाटवाद्वा भेदविपर्यासाद्यवभासः स सोपाधिकाध्यासो यथा प्रतिविम्बद्विचन्द्राद्यध्यासः । तयोरिहाहंकारात्मनोर्निरुपाधिकाध्यासे दृष्टान्तः शुक्तिरजताध्यास उक्तः ।

संसृष्टरूपतयैवाध्यासो न स्वरूपेण, भ्रमोत्पत्तेः प्राक् संप्रयोगाधारत्वेन भ्रमकाले च तत्र सत्ताप्रदत्वेन बाधोत्तरकाले तदवधित्वेन तस्य सत्वात्। रजतांशस्य तु स्वरूपेणैवाध्यासस्तस्य प्रतिभासमात्रशरीरत्वात् पूर्वोत्त-रकालयोरभावात् । एवं च सति परस्पराध्यासेध्यस्तस्य मिथ्यात्वादिति शून्यावशेषताप्रसंजनं निरवकाशीकृतं ।

ननु यद्येवं सत्यमिथ्यासंभेदात्माविषयस्तर्हि कथं सदेवेदमित्यस्तीति वा ऽनुभवस्तथाचानिर्वचनीयाविद्यामयत्वे रजतस्य सदित्यनुभवविरोध इति चेत् । नैवं, अस्मन्मते ऽनुभवविरोधाभावात् । मतान्तरेष्वेव विरोधसंभवात् । तथाहि । सदात्मनि चैतन्ये शुक्तीदमंशावच्छिन्ने रजतस्य स्वरूपेणाध्यस्तत्वादधिष्ठानसत्तासंसृष्टतयैव तदवभासात् सदि-त्येवमादिप्रकारोनुभवो न विरुध्यते । यथा ऽनिदमोरजतस्येदंतातादा-त्म्याध्यासात् तस्मिन्निदंतावभासः परेषां संमतस्तथास्माकं सदात्मन्य-धिष्ठाने रजतस्याध्यस्तत्वात् सदित्याद्यनुभवो न विरुध्यते। अत्र प्राची-नाचार्यैस्त्रिविधं सत्वमंगीकृत्यापि समाध्यन्तरमुक्तं ब्रह्मणः पारमार्थिकं सत्वं वियदादिभूतभौतिकप्रपंचस्य व्यावहारिकंसत्वं भ्रान्तिप्रतिपन्नरज-तादेः प्रातिभासिकंसत्वं तत्र परमार्थसदपेक्षयानिर्वचनीयत्वेपि प्रातिभा-सिकसत्वस्य रजतादौ संभवात् सत्वानुभवसिद्धिरिति । तन्मंदमतिव्यु-त्पादनायोक्तं न पुनः सत्त्वभेदमंगीकृत्य । अतएव विवरणाचार्यै र्मायोपाधिकमविद्योपाधिकमिति च व्यावहारिकप्रातिभासिकसत्वे विशे-ष्येते स्म । तेन चैकस्यैव सत्वस्योपाधिभेदात् व्यवहारभेदोपि

स्वरूपभेदो नास्तीति द्योतितं । ×× अतः सर्वथा चिदात्मनि सद्रूपे तादात्म्याध्यासाद्रजतस्य सदिदमित्यनुभवो न विरुध्यत इत्यस्मन्मते नानुभवविरोधः । मतान्तरेष्वस्त्येवानुभवविरोधः । तथाहि । अख्यातौ तावदपरोक्षावभासिनो रजतस्य स्मर्यमाणत्वे स्मर्यमाणस्य वा तस्यापरोक्षावभासित्वे सर्वत्र प्रतिपन्नोपाधौ विषयाभावेचानुभवाविरोधः । अन्यथाख्यातावपि प्रतीयमानस्य संसर्गस्य शून्यत्वे पुरोदेशे साक्षात्प्रतीयमानस्य रजतस्य देशान्तरसत्वे चानुभवविरोधः । आत्मख्यातौ च बहिरवभासमानस्यांतरत्वेनुभवविरोधः । असत्ख्यातौ चापरोक्षस्यासत्वेनुभवविरोधो दुष्परिहरः। तस्मात् सदसज्ज्ञानयोर्मिथ्यात्वप्रसिद्ध्यभावादस्य च रजतज्ञानस्य मिथ्यात्वप्रसिद्ध इदंज्ञानसमवायिमिथ्यात्वं तद्विषयस्यरजतस्य सदसद्विलक्षणत्वलक्षणं मिथ्यात्वं गमयतीति मिथ्याविषयं ज्ञानं मिथ्याज्ञानमिति सर्वमुपपन्नं । ||

×× ननु सर्वस्याविद्यकस्याधिष्ठानचैतन्यरूपसत्त्वसम्बन्धाविशेषे कथं प्रातीतिकव्यावहारिकविभाग इति चेत् ? उच्यते । अविद्यारिक्तदोषाजन्यं जडं व्यावहारिकं आगन्तुकदोषजन्यं प्रातीतिकं तथा तत्सम्बन्धादेकमेव सत्त्वं त्रिविधमित्युच्यते । कालत्रयाबाधिते ब्रह्मणि स्वरूपे पारमार्थिकं सत्त्वं घटादौ व्यावहारिकं तदेव सत्त्वं रजतादौ प्रातीतिकमिति । अन्ये तु त्रीणि सत्त्वानि भिन्नान्येव व्यवहाराय कल्पितानीत्याहुः तच्चिन्त्यम् । सर्वत्र सद्बुद्धेरेकाकारत्वाल्लाघवाच्च । तस्मादुपाधिभेदादेव सत्त्वस्य त्रैविध्यम् ।

|| यस्मात् भ्रान्तित्वव्यवहारः सदसद्ज्ञानयोरनुपपन्नो, यतश्चपक्षान्तरेष्वनुभवविरोधो यतश्च ज्ञानद्वय-पारोक्ष्य-स्मृतित्व-स्मरणाभिमानप्रमोषः तद्धेतुरविवेकस्तन्निमित्तप्रवृत्त्यो र्जन्मान्तरानुभूतस्मृतिश्चेत्यप्रतिपन्नमपूर्वं बहुकल्पनीयमख्यातौ; अन्यथाख्यातौचान्यत्र प्रतिपन्नस्यान्यत्र सत्वमिन्द्रियस्यच जन्मान्तरानुभूतदेशकालव्यवहितार्थग्राहित्वं, दोषस्य च तथाविधादृष्टसामर्थ्यं, संसर्गस्य

ननु यथाप्रतिभासं रजतस्य सत्यता कस्मान्न स्यात् किमिति मिथ्यात्वं साध्यत इति चेत् कश्चिद् ब्रूयात् तदा तं प्रति ब्रूयात्, तथासति घटादिवादिदमपि रजतं सर्वैरेवादुष्टकरणैरपि गृह्येत, पारमार्थिकत्वे ऽस्यस्वज्ञाने कारणदोषानपेक्षणात् । नहि घटादि स्वज्ञाने कारणदोषमपेक्षते । मायामयत्वेतु मन्त्राद्युपहत चक्षुष इव दोषोपहतज्ञानकरणा एव पश्यन्तीति युक्तं । तस्मान्न परमार्थं । किंचाधिष्ठानतत्त्वज्ञानवाध्यत्वादप्यस्य मायामयत्वासिद्धिः । नहि सतो ऽसतो वार्थस्य ज्ञानवाध्यत्वमस्ति इदंत्वधिष्ठानतत्त्वाववोधोदये तुलोन्नमनादिवन्नांतरीयकतया विलीयते तद्विलयमन्तरेण तदधिष्ठानयाथात्म्यावधारणायोगात् । एवंह्यधिष्ठानतत्त्वमुत्तरकाले परामृश्यते नेदंरजतमभूदपि तु भविष्यति किन्तु सदा शुक्तिरेवेदं मिथ्यैवैतावंतंकालं रजतमित्यभादिति । नच नेदंरजतमिति रजतप्रातियोगिकान्योन्याभावोऽथो वाधकज्ञानं संभवति तस्य धर्म्यादिस्वरूपज्ञानसव्यपेक्षतयापरिज्ञाते शुक्तिस्वरूपे ऽसंभवात् । परिज्ञाते तु तस्मिंस्तज्ज्ञानेनैव रजतभ्रमवाधसिद्धेः कृतकरणस्यान्योन्याभावज्ञानस्य निरर्थकत्वापत्तेः। नचेदमाकारज्ञानमेवान्योन्याभावज्ञानजनकमिति युक्तं । तस्य भ्रमकालेपि सत्वात् अन्यथेदमिति रजतमिति च सामान्यविशेषयो र्भेदेनोल्लेखासंभवात् सामान्यज्ञानस्याध्यासविरोधित्वे

---

च शून्यस्य प्रत्यक्षतेति प्रमाणविरुद्धं बहुकल्पनीयमतः सर्वदोषपरिहाराय यथाप्रतिपन्नस्य मिथ्यात्वं नामैकः स्वभावो "नास्तिरजतं मिथ्यैव रजतमभात्" इत्यनुभवासिद्धः समाश्रयणीयो, ऽविद्योपादानकल्पनायाश्चान्वयव्यतिरेकासिद्धत्वात् ।...सत्यस्य बस्तुनो मिथ्यावस्तुसंभेदावभासमानो मायामिथ्याऽनिर्वचनीयख्यातिरध्यास एवायम् ।

चाध्यासानुदयप्रसंगात् । तस्मान्नेदं रजतमिति प्रतिपन्नेदंतानुवादेनास्यैव रजतात्मत्वमत्रैव प्रतिभातं प्रतिषिध्यते । तथाच साक्षात् प्रतिपन्नोपाधावेव प्रतिषिध्यमानत्वात् सिद्धमस्य मिथ्यात्वं । अस्य देशकालान्तरसत्वापेक्षया प्रतिषेधे रजतमत्रेदानींवा नास्तीति प्रतिषेधः स्यात्, न नेदंरजतमिति। यथाप्रतिपन्नं हि निषेधेऽनुवादः स्यात्। इदं रजतमिति हि प्रतिपन्नमिदानीमत्रेति वा न रजतं प्रतिपन्नमिति । तथाच नेदं रजतमिति लौकिकपरमार्थरजताभावाभिप्रायमिति प्राचामाचार्याणां वचनस्यैवं व्याख्या, कालत्रयेपि लौकिकपरमार्थरजतमिदं प्रतिपन्नं न भवति किन्तु यत्किञ्चित् मिथ्यैवेति। अत्र च लौकिकपरमार्थशब्देन रजतस्य रजतत्वावच्छेद आवेद्यते, तथाच रजतत्वावच्छिन्नं रजतमिदं न भवति किन्तु तदाभासो मिथ्यैवेति । एवंच सति नान्यथाख्यात्याशंकावसरो ऽधिष्ठानयाथात्म्याज्ञानात् पूर्वोक्तसहकारिसहकृतादिदमेव रजताकारतामापन्नमिव पूर्वमिदानीमधिष्ठानतत्त्वाववोधे रजतात्मतातिक्रान्तमिवेत्यत्रैव प्रतिपन्नस्यात्रैव निषेधोपपत्तेः । नचैवंविध प्रतीतिनिषेधयोरन्यथाख्यातिपक्षेपि तुल्यता पुरोवर्तिन एव व्याधिकरणप्रकारत्वांगीकारादिति वाच्यं । विनाविद्यामन्यस्यान्यप्रकारकज्ञानागोचरत्वस्य दुर्निरूपत्वादविद्यांगीकारेचास्मदिष्टानिर्वचनीयत्वस्यैव नामान्तरकरणत्वापत्तेरिहप्रतीयमानप्रकारस्य चान्यत्रसत्वकल्पनानिरासात्। तस्माद्यथा शुक्त्यादौ तत्तदज्ञानविलसितं रजतादि मिथ्या तथात्मन्यपि प्रमातृत्वाद्यात्माविद्याविलसितं मिथ्येति युक्तम् ।

( पूर्वपक्षः )

ननु भवत्वेवंलक्षणे वहिरर्थेध्यासोऽविद्याविलसितो मिथ्याप्रत्ययरूप-

स्तथापि प्रमातृत्वादिरात्मनि नैवंलक्षण उपपद्यते तस्मिन् कारणत्रितयजन्यत्वस्य तटस्थलक्षणस्यान्यस्यान्यात्मनावभासरूप स्वरूपलक्षणस्याप्यसंभवात् । निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनमिति श्रुतेरात्मनि सामान्यांशविशेषांशयोरसंभवादधिष्ठानत्वायोगात् । न चक्षुषा गृह्यत इत्यादि श्रुतिभिरिन्द्रियगोचरत्वनिषेधात् संप्रयोगोपि कारणांशस्तस्मिन्नसंभवति । निरवद्ये निरंजने तस्मिन्न एवत उपाधितो वा प्रमातृदोषः संभवेत् । करणगोचरत्वाभावादेव करणदोषोपि निरस्तः। न संदृशे तिष्ठति रूपमस्येति श्रुतेरात्मानात्मनोरधिष्ठानाध्यस्यमानयोः सादृश्यात्मा विषयदोषोप्यत्र न संभाव्यते। अधिष्ठानादन्यत्राध्यस्यमानांशाभावादेव तस्याध्यस्यमानतादात्म्यलक्षणोऽन्यस्यान्यात्मनावभासोपि न संभाव्यते । किंचाधिष्ठानसामान्यांशाध्यस्यमानविशेषांशयोः परमार्थरजत इवाध्यासस्थलादन्यत्र क्वचित्तादात्म्यानुभवाभावात् तज्जन्यसंस्काराभावाच्च नाध्याससिद्धिः । नह्यात्मानात्मनोः क्वचित्तादात्म्यं संभाव्यते प्रत्यक्पराग्भावेन विषयविषयिभावेन च विरुद्धस्वभावयोस्तयोस्तमःप्रकाशवदितरेतरतादात्म्यानुपपत्तेः । तस्मादहंकारादिदेहांतस्यानात्मनस्तद्धर्माणांचात्मन्यध्यास आत्मतद्धर्माणां तद्विपर्ययेणानात्मन्यध्यास इति यदभिप्रेयते तन्न संभावनास्पदमिति ।

## ( सिद्धान्तः )

अत्रोच्यते ।

ब्रह्माभेदात्स्वतःस्फूर्तेरविद्यादोषसंभवात् ।
सादृश्यस्याननुगमात्पृथकसिद्ध्यनपेक्षणात् ॥
सत्यस्य मिथ्यातादात्म्यादन्योन्याध्याससंभवात् ।
संभावितः प्रमात्रादेरप्यध्यास इहात्मनि ॥

शुक्तौ रजतवदिहात्मन्यपि प्रमातृत्वादेरध्यासः संभावित एव। तथाहि । यद्यपि निरवयव एव प्रत्यगात्मा नित्यत्वात्तथाप्यस्य स्वरूपेण भासमानस्यैव सतो विद्यमानस्वाभाविकब्रह्मरूपता नावभासत इत्यगृह्यमाणांशविशेषस्य संभवादधिष्ठानत्वमुपपद्यते । नच ब्रह्मरूपोविशेषः प्रत्यगात्मनोर्थान्तरं । तस्मात् चित्सदात्मना भासमानोपि प्रत्यगात्मा पूर्णब्रह्मात्मना न भासत इत्यस्त्यंशद्वयमिहापीत्यधिष्ठानत्वं सिद्धं। निष्कलत्वश्रुतिरवयवाभावमात्रपरा सत्यवयविभ्योन्य आत्मेति ज्ञापयति न यथोपपादितांशाभावमिति न श्रुतिविरोधः । शुक्तावपीदमाकारवृत्तिविषयो न शुक्तेरवयवरूप एकदेशः किंतु दोषाछादितविशेषा शुक्तिरेव स्वरूपेण भासमानापि दोषवशात् स्वगतविशेषावछेदेन न भासत इत्येतादृश एवांशांशिभावो विवक्षितोन्यथा इदंत्वशुक्तित्वयोर्भिन्नाधिकरणकतया सामानाधिकरण्याभावादियंशुक्तिरिति तदेकत्वव्यवहारो विलयमियात् । तस्मान्न दृष्टविरोधोपीहास्तीति ।

यदुक्तमात्मन इन्द्रियागोचरत्वात् संप्रयोगायोगादध्यासकारणांशाभाव इति, अत्रोच्यते, नायं दोषो, यतोधिष्ठानस्फुरणाय संप्रयोगापेक्षा तच्चेत्तेनविनापि स्यात्तदा तत्र संप्रयोगो निरर्थको, यत्र विषयस्य स्वतःस्फूर्त्यभावस्तत्र सोर्थवानिति न तस्य कारणत्वभंगप्रसंगः । नहि उलूकमार्जारादौ क्वचित् रूपदर्शनं प्रति चक्षुष आलोकनिरपेक्षत्वं दृष्टमिति सर्वत्र तदपेक्षता दृश्यमाना भज्यते । तादिहात्मनः सदा स्वयंप्रकाशमानस्वरूपत्वात् स्वत एव स्फुरति तस्मिन्ननात्माध्याससंभवान्न संप्रयोगापेक्षा तत्कार्यस्य प्रागेव सिद्धेरिति ।

नन्वविषये कादाचित्कप्रत्ययागोचरे ऽध्यासादर्शनादात्मनश्चाविषयत्वात्

कथं तस्याध्यासाधिष्ठानतेति चेत्। न, आत्मनोपि कथंचिद्विषयत्वसंभवात्। अध्यस्यमानानात्मसंभेदात् प्राक् स्वतःस्फुरणेपि तत्संभेदे प्राप्तविशेषाकारस्यागन्तुकत्वात्तेनात्मना कादाचित्कप्रत्ययगोचरत्वेन विषयत्वोपचारात्। तदुक्तमाचार्यैः न तावदयमेकान्तेनाविषयोस्मत्प्रत्ययविषयत्वादिति। सर्वत्र ह्याधिष्ठानत्वमध्यस्यमानसापेक्षं न स्वतस्तेनाविना तद्व्यवहारादर्शनात् ततश्च स्वतोऽविषयस्याप्यात्मन उक्तविधया विषयत्वसिद्धिरिति। ×

---

× शंका:—भवत्वध्यासः शुक्त्यादावात्मनि तु न संभवति। यत्रापरोक्षाध्यासाधिष्ठानत्वं तत्रेन्द्रियसंयुक्तत्वं विषयत्वं चेति व्याप्तिः शुक्त्यादौ दृष्टा। तत्र व्यापकाभावादात्मनोऽधिष्ठानत्वं न संभवति। ( भाष्यरत्नप्रभा )

उत्तरः—( क ) "न तावदयमेकान्तेनाविषयो ऽस्मत्प्रत्ययविषयत्वात्, ( ख ) अपरोक्षत्वाच्च ( ग ) प्रत्यगात्मप्रसिद्धेः।" ( शांकरभाष्य )

( क ) "नतावदयमेकान्तेनाविषयोऽस्मत्प्रत्ययविषयत्वात्"।

( १ ) अस्मत्प्रत्ययोऽन्तःकरणं तत्राभिव्यक्तः सन् विषय इव भवतीति भाष्यार्थः। निरंशस्य स्वयंज्योतिषोऽप्यात्मनः स्वरूपं भासमानस्यापि परिपूर्णपरब्रह्मरूपेणानवभासात् प्रतीचश्च निर्विशेषतया निर्विकल्पस्यान्यत्र विशेषतो ऽनवभासमानस्यापि स्फुटमन्तःकरणे ऽवभासनात्तद्गताभासाविवेकेन स्फुटाभिव्यक्तेरन्तःकरणेऽवभासनात्तद्गतभासाविवेकेन स्फुटाभिव्यक्तेरन्तःकरणनिमित्तत्वात्तत्र विषयवद्भावाद्विषयत्वमप्यस्य सुसंपादम्। ( संक्षेपशारीरकटीकाद्वय )

( २ ) यद्यपि चैतन्यैकरसोऽनिदमात्मकत्वादविषयस्तथाप्यहंकारे व्यवहारयोग्यो भवतीति गौण्या वृत्त्या ऽस्मत्प्रत्ययविषयतोच्यते प्रमेयस्य व्यवहारयोग्यत्वाव्यभिचारात्। ( पञ्चपादिका )

(३) शंका:—भाष्यकारेणात्मनोऽस्मत्प्रत्ययविषयत्वोपवर्णनेनाविषयत्वस्यासिद्धिरुक्ता, सा न युक्ता, स्वप्रकाशस्य विषयत्वायोगात्।

उत्तर—सत्यं प्रत्यगात्मा स्वयंप्रकाशत्वादविषयोऽनंशश्च; तथाप्यनिर्वच-

नीयानाद्यविद्यापरिकल्पितबुद्धिमनःसूक्ष्मस्थूलशरीरेन्द्रियावच्छेदेनानवच्छिन्नोऽपि वस्तुतोऽवच्छिन्न इव, अभिन्नोऽपि भिन्न इव, अकर्त्तापि कर्त्तेव, अभोक्तापि भोक्तेव, अविषयोऽप्यस्मत्प्रत्ययविषय इव, जीवभावमापन्नोऽवभासते, नभ इव घटमणिकमल्लिकाद्यवच्छेदभेदेन भिन्नमिवानेकविधधर्मकं भवति।

शंका—स्वतोऽविषयत्वमौपाधिकरूपेण विषयत्वमिति किमिति व्यवस्थाप्यते, स्वत एव शुक्तिवद् ग्रहणाग्रहणे किं न स्याताम्।

उत्तर—निरंशत्वान्नैवं। नहि चिदेकरसस्यात्मनः चिदंशे गृहीते ऽगृहीतं किंचिदस्ति। न खल्वानन्दनित्यत्वविभुत्वादयोऽस्य चिद्रूपाद्वस्तुतो भिद्यन्ते, येन तद्ग्रहे न गृह्येरन्।

शंकाः—तर्हि साक्षिप्रतिभास आनन्दाद्युल्लेखोऽपि स्यात्।

उत्तरः—गृहीता एव तु कल्पितेन भेदेन न विवेचिता इत्यगृहीता इवाभान्ति। यथा खल्वभिज्ञायां भासमानमपि देवदत्तैक्यं तत्तदन्तोपाधिद्वारकसामानाधिकरण्यापरामर्शाद्विविक्तं नोल्लिख्यते, एवं चिद्रूपभानेऽपि दुःखप्रत्यनीकत्वादिरूपेणापरामृष्टाऽनन्दादयोऽप्यगृहिता इव भान्तीत्यर्थः।

शंकाः— चित्प्रतिभासे तदात्मत्वादानन्दादयो भान्ति चेत्, तर्हि बुद्ध्यादिभ्यश्चैतन्यस्य भेदोऽपि प्रतीयेत; तत्र विद्यमानत्वात्, तथाच बुद्धाद्यध्यासायोगः।

उत्तरः— नचात्मनो बुद्ध्यादिभ्यो भेदस्तात्त्विको, येन चिदात्मनि गृह्यमाणे सोऽपि गृहीतो भवेद्; बुद्ध्यादीनामनिर्वच्यत्वेन तद्भेदस्याप्यनिर्वचनीयत्वात्। (आनन्दादीनां वास्तवत्वाच्चैतन्यैकरसता न भेदस्यापीत्यभानमित्यर्थः)। तस्माच्चिदात्मनः स्वयंप्रकाशस्यैवानवच्छिन्नस्यावच्छिन्नेभ्यो बुद्ध्यादिभ्यो भेदाग्रहात् तदध्यासेन जीवभाव इति।

तस्य चानिदमिदमात्मनोऽस्मत्प्रत्ययविषयत्वमुपपद्यते (इदमात्मकत्वेन विषयत्वमनिदमात्मकत्वेनास्मदुल्लेखश्चोपपद्यत इत्यर्थः। इदमनिदमात्मकत्वं जीवस्य तद्धर्मान्वयप्रदर्शनेनोपपादयति—"तथाहीति")। तथाहि—कर्त्ता भोक्ता चिदात्मा ऽहंप्रत्यत्ये प्रत्यवभासते। न चोदासीनस्य तस्य क्रियाशक्तिर्भोगशक्तिर्वा संभवति। यस्य च बुद्ध्यादेः कारणसंघातस्य क्रियाभोगशक्ती न तस्य चैतन्यम्। तस्माच्चिदात्मैव कार्यकारणसंघातेन ग्रथितो लब्धक्रियाभोगशक्तिः,

स्वयंप्रकशोऽपि बुद्ध्यादिविषयविच्छुरणात् (मिश्रणात्), कथञ्चिद-स्मत्प्रत्ययविषयोऽहंकारास्पदं जीव इति च, जन्तुरिति च, क्षेत्रज्ञ इति चाख्यायते। न खलु जीवश्चिदात्मनो भिद्यते। तस्माच्चिदात्मनोऽव्यतिरेकाज्जीवः स्वयंप्रकाशोऽप्यहंप्रत्ययेन कर्तृभोक्तृतया व्यवहारयोग्यः क्रियत इत्यहंप्रत्ययालम्बनमुच्यते। (अस्मत्प्रत्ययविषयत्वमपि जीवस्याहंप्रत्ययविशिष्टेऽन्तःकरणे व्यवहारयोग्यत्वापत्तिर्न कर्मत्वमतो न कर्मकर्तृत्वाविरोधः। अहं सुखीत्याद्यनुभवात्सुखादिविशिष्टरूपेण कर्मत्वम्, अन्तःकरणविशिष्टरूपेण कर्तृत्वम्)। नचाध्यासे सति विषयत्वं विषयत्वे चाध्यास, इत्यन्योन्याश्रयत्वामिति—सांप्रतं; बीजाङ्कुरवदनादित्वात्, पूर्वपूर्वाध्यासतद्वासनाविषयीकृतस्योत्तरोत्तराध्यासविषयत्वाविरोधादित्युक्त "नैसर्गिकोऽयं लोकव्यवहार" इति भाष्यग्रन्थेन। तस्मात् सुष्ठूक्तम् "न तावदयमेकान्तेनाविषय" इति। जीवो हि चिदात्मतया स्वयंप्रकाशतयाऽविषयोऽप्यौपाधिकेन रूपेण विषय इति भावः। (स्वप्रकाशे यावत्सत्त्वं प्रकाशनान्नारोप इति पक्षः पूर्वपूर्वाध्यासवशादप्रकाशसमर्थनेन निरस्तः)। (भामती, वेदान्तकल्पतरुः, कल्पतरुपरिमलः)

(ख) [१] विषयत्वंचेदध्यासप्रयोजकत्वमभ्युपगम्य चेदमुक्तं (विषयत्वस्याधिष्ठानत्वे प्रयोजकत्वमंगीकृत्य तावदुत्तरमुक्त) वस्तुतस्तु न तदपेक्षानियमः। अपरोक्षरूपावषयभ्रमधारपरोक्षाधिष्ठानमात्रमपेक्षते न त्वारोप्याधिष्ठानयोरिन्द्रियग्राह्यत्वमपि व्यभिचारात् (स्वपनभ्रमादिषु स्वतोऽपरोक्षत्वमात्रेणाध्यासो दृष्टः)

"न ह्यारोपेऽधिष्ठानस्य विषयतया भानमपेक्षितं, गौरवात्, किन्तु भानमात्रं। तच्च स्वप्रकाशस्य स्वत एव, जडस्य तु ज्ञानविषयतया। भाष्य आत्मनोऽपि विषयत्वप्रतिपादन तु वस्तुगतिमनुरुध्य तदपि वक्तुं शक्यत इत्यभिप्रायेण।"

[ब्रह्मविद्याभरणम्]

तस्मादपरोक्षत्वमात्रमपरोक्षभ्रमाधिष्ठानत्वेऽपेक्ष्यते। तच्च यत्र स्वत एव संभवति तत्र न संप्रयोगस्याप्यपेक्षेत्यभिप्रेत्य भाष्य उक्तं—"अपरोक्षत्वाच्च"। तत्र प्रत्यगात्मनः स्वतोऽपरोक्षतया न विषयत्वापेक्षत इत्यर्थः।

[२] अधिष्ठानसामान्यज्ञानमध्यासकारणं न संप्रयोगः। तस्मिन् सत्येतद्व्यतिरेकेण कार्याव्यतिरेकात्। गाढान्धकारे सत्यपि संप्रयोगे सति च संस्कारादौ, रजतादिभ्रमानुदयात्। नचान्धकारप्रतिबन्धादेव तदनुदय इति वाच्यं। दोषस्य

भ्रमकारणत्वेन तदप्रतिबन्धकत्वादन्यथा मन्दान्धकारेपि भ्रमो न स्यात् स्वसंबाधिज्ञानप्रतिबन्धकांधकारस्य रजतज्ञानाप्रतिबन्धकत्वाच्च। अधिष्ठानसामान्यज्ञाने सत्यन्धकारस्य तत्प्रतिबन्धादर्शनाच्च। अतो ऽधिष्ठानसामान्यज्ञानमध्यासकारणं। तच्च लोके संप्रयोगाद्भवति। आत्मनस्तु स्वप्रकाशत्वात्तेनविनापि तत् सुलभम्। ( अद्वैतवेदान्तसिद्धान्तविवरणभाष्य )

( ३ ) अध्यासे सत्यस्मत्प्रत्ययविषयत्वं सति तस्मिन्नध्यास इत्यन्योन्याश्रयत्वमाशंक्यानादित्वेन परिहारेऽपि परिहारान्तरमाह—" अपरोक्षत्वाच्चेति "। अस्मत्प्रत्ययाविषयत्वेऽप्यपरोक्षत्वात्, एकान्तेनाविषयत्वाभावात्, तस्मिन्नहंकाराध्यास इत्यर्थः। ( आनन्दगिरीयव्याख्या )

( ग ) " प्रत्यगात्मप्रसिद्धेः—"

अस्ति तावत् प्रत्यगात्मप्रसिद्धि र्भयेदं विदितमिति, इतरथा स्वपरसंवेद्ययोरविशेषापत्तेः। सचात्मनः स्वगोचरसंविदो वैरूप्यापातात्, प्रयोगेऽपि नात्मा स्वाश्रयप्रकाशप्रकाश्यः प्रकाशकत्वात् प्रदीपवत्। नापि विषयसंविद्बलात्, तदन्तरेणापि स्फुरणात्, प्रयोगोऽपि नात्मा स्वातिरेकिसंविदधीनसिद्धः संवित्कर्मतामन्तरेणापरोक्षत्वात् संवेदनवत्। नाप्यनुमानभ्रमाभ्यां, अबाधितापरोक्षप्रतिभासत्वात्। परिशेषात् स्वतःसिद्धिरित्यर्थः। तथाच प्रयोग, आत्मा स्वप्रकाशस्ततोऽन्यथानुपपद्यमानत्वे सति प्रकाशमानत्वात् न य एवं न स एवं यथा कुम्भ इति।

स्वयंप्रकाशत्वं च स्वसंविन्नैरपेक्ष्येण स्फुरणं। ननु तत्प्रमाणस्यात्मा विषयो न वा, आद्ये व्याघातो अन्त्ये ऽसाधकत्वं। न तावद् व्याघातो ऽनुमानगोचरस्य तदगोचरत्वाप्रसाधनात्। न च प्रमाणविषयत्वमात्रेण दृश्यता, सा हि स्वातिरेकिसंविदपेक्षानियतिः, न सा ऽत्मनोऽस्ति सुषुप्तेऽपि सिद्धेः। अपरे पुनरेवमूचिरे, अविषयेऽपि शशविषाणे विषयत्वनिषेधवदविषयेऽपि स्वातिरेकिसंविदपेक्षावारणात् साधकत्वमिति। सर्वथाप्यात्मनः प्रकाशमानत्वात् संभाव्यते ऽध्यास इति।

(ब्रह्मसूत्रभाष्यप्रकटार्थः)

यदप्युक्तं निरवद्यं निरंजनमिति श्रुतेरात्मनि स्वतः परतो वा दोषसंसर्गाभावान्नाध्याससंभव इति। तन्न, तत्र प्रसिद्धदोषाभावेपि स्वाभाविकाविद्यारूपदोषसंभवात्तदधीनाध्याससिद्धेः।

स्वप्रकाशसच्चिदात्मतया ब्रह्मरूपस्यात्मनस्तेनैवरूपेणास्तिप्रकाशत इति व्यवहारयोग्यत्वेपि प्रत्यग्रूपं ब्रह्म नास्ति न प्रकाशत इति विपरीतोव्यवहार आत्मनि किंचिदावरणमन्तरेण नोपपद्यते। यच्चावरणं सैवाविद्या। असंगे निरवयवे परिपूर्णे तस्मिन् परमार्थभूतस्य मूर्त्तस्यामूर्त्तस्य वा द्रव्यगुणादेरावरणस्यासंभवाद् दृश्यते च ब्रह्मस्वरूपानवभासलक्षणमावरणमात्मनीत्यविद्यातद्भावे ऽयमुपपत्तिः।

शंकाः—प्रकाशमान आत्मन्यप्रकाशाविद्याऽनुपपन्नः स्वभावविरोधात्।

उत्तरः– सत्यमेतत् परमार्थतः, + तथापि स्वानुभवसिद्धत्वान्नापह्नोतुं शक्यते। प्रकाशमान एवार्थ आवरणसामर्थ्यादप्रकाशमानोपि भवतीत्यत्र सवितृदृष्टान्तसंभवाच्च। यथा सवितोदयशिखरि शिखरोपरि प्रकाशमान मंडलो दिङ्मण्डलमखिलं स्वकिरणनिकरैः प्रकाशयन् परिवर्त्तमानः कदाचित् घनमेघाभ्रपटलीसमावृतो यथावन्न प्रकाशते। नहि घनादिस्तं सर्वथावृणोति तथासति दिवसप्रवृत्तिप्रतीत्यभावप्रसंगात्। नापि तं नावृणोति यथावत्प्रतीतिप्रसंगात्। तथेदमप्यज्ञानं सर्वात्मनात्मानं नावृणोति तथासत्यणुमात्रमपि न प्रकाशेतेति जगदांध्यप्रसंगः। नापि नावृणोत्यात्मानं तथासति ब्रह्मरूपेणावभासप्रसंगात्। तथाच यथा घनमेघाभ्राणि जीमूतस्यावस्थाविशेषाः सवितृप्रकाशाच्छादनं तरतमभावेन

+ जडस्याज्ञानस्य चैतन्येन स्वभावतो विरोधः। तथा सविकारानिर्विकारत्वाभ्यां धर्मतोऽपि विरोधः। तथा कार्यकरणादिरूपेण सद्वयमज्ञानमद्वयश्चाऽत्मेति व्यवहारतोऽपि विरोधस्ततो विरोधान्नाज्ञानमात्मनि परमार्थमभ्युपगम्यते।

कुर्वन्ति एवमियमप्यविद्या सत्वादिगुणोद्रेककृतावस्थाविशेषा तारतम्येनात्मप्रकाशमाच्छादयति। तस्मादस्त्यात्मन्यविद्यालक्षणो दोष इति सिद्धम्।

इयंचानेकविक्षेपसंस्कारवती सत्यात्मनि प्रमातृत्वाद्यध्यासकारणं भवत्यघटितघटनापटीयस्त्वादस्याः। तथा ऽविद्यैवेह प्रमातृदोषः सिद्धः। करणदोषनिरास इष्ट एवेति न स समर्थ्यते। अधिष्ठानभूतस्यात्मनः स्वप्रकाशत्वादध्यस्यमान प्रमातृत्वादेः साक्षिवेद्यत्वाच्च करणानपेक्षणात्। नन्वेवं सत्यनादित्वादात्माविद्ययोः सदासंश्लिष्टत्वाच्च सदा प्रमातृत्वाद्यध्यासः कस्मान्न स्यात् तथासति सुषुप्त्यादेरभावप्रसंग इति चेत्। नैषदोषः। प्रमातृत्वादेरप्यनादित्वांगीकारात् सुसुप्त्यादावपि तस्य संस्कारशेषेणावस्थानाभ्युपगमात् कदापि स्वरूपनाशाभावात्। तथाचाहुर्भाष्यकारः नैसर्गिकोयं लोकव्यवहार इति। एवमयमनादिरनंतो नैसर्गिकोध्यास इति च। नन्वेवं प्रवाहानादित्वेपि व्यक्तिकादाचित्कत्वे निमित्तान्तरं वक्तव्यं तदभावे तदसिद्धेरिति चेत्। उच्यते। साभासाविद्याश्रित पूर्वपूर्वानात्माध्याससंस्कारोद्बोधस्य कादाचित्कत्वेन उत्तरोत्तर तादृगध्यासनिमित्तत्वमिष्यते; यथोक्ताविद्या च स्वगताचिदाभासाविविक्ततया चिदात्मनि स्वाश्रये प्रमातृत्वाद्यध्यासं प्रत्युपादानकारणं चास्तीति न काचिदिहानुपपत्तिः।

यदुक्तं सादृश्याभावात् विषयदोषाभावादध्यासाभाव इति तदयुक्तं। विकल्पासहत्वात्। किं केनाप्यंशेनात्मानात्मनोः साम्याभावोभिप्रेतः सर्वात्मना वा लक्षणतो वा। नाद्योर्थत्वसामान्यस्य सत्वात्। न द्वितीयः, क्वचिदपि कस्यापि केनचित् सर्वात्मना साम्यायोगात् तथासति

भेदाभावात् सादृश्यमेव विलयमियात्। न तृतीयो लक्षणतः सदृशतायाः सर्वभ्रमेष्वनुवृत्त्यभावेनाकारणत्वात् । न हि आकाशेध्यस्यमानस्य कार्ष्ण्यादेराकाशेन सादृश्यं कयापिविधया वर्त्तते, नह्येतावता तत्र तन्नाध्यस्यते । एवमात्मनि ब्राह्मण्यादिजात्याद्यध्यासोप्युदाहर्त्तव्यः । किंच यत्र यस्य सादृश्यं विद्यते तत्तत्र तस्य भ्रमं जनयतीति न नियन्तुं शक्यते, शुक्तौ शुक्त्यंतरसाम्यस्य विद्यमानस्यापि तत्र तद्भ्रमजनकत्वादर्शनात् । सदृशदर्शनं हि संस्कारोद्बोधायापेक्षते संस्कारोद्बोधस्यानेकहेतुकत्वादन्यतःसिद्धौ क्वचिद्विद्यमानमपि सादृश्यमप्रयोजकमित्यत आत्मानात्मनोरध्यासः सादृश्याभावेपि नानुपपन्नः । तथाध्यस्यमानस्यानात्मनोन्यत्रसत्वाभावेपि मिथ्याभूतेनेहैवाविद्योपस्थापितेन सत्यस्यात्मनस्तादात्म्यावभासादन्यस्यान्यात्मनावभासरूपस्वरूपलक्षणमप्यत्र संभवत्येव ।

यच्चोक्तमध्यासस्थलादन्यत्राध्यस्यमानाधिष्ठानयोस्तादात्म्यानुभवाभावात्तत्संस्काराभावेनाध्यासानुपपत्तिरिति तत्परिहर्त्तव्यम् । अत्रोच्यते । सत्यं पूर्वानुभवसंस्कारमन्तरेण भ्रमानुत्पत्तेः पूर्वानुभवस्तत्रापेक्षणीय इति, तथापि पूर्वप्रतीतिमात्रमपेक्ष्यते संस्कारोदयाय नतु तत्प्रमितिः, तदभावे संस्काराभाव इति व्यतिरेकादर्शनात् भ्रान्तिदृष्टेपि स्थाण्वादौ पुरुषस्मृतिदर्शनात् । नन्वद्वैतवादिनस्तवानयोभ्रान्त्यापि वहिस्तादात्म्यानुभवाभावात् कथं संस्कारः कथं वाध्यास इति चेत्, नायं दोषो दण्डस्याशुवक्रताया आलातचक्रतायाश्चान्यत्रादृष्टाया अपि भ्रान्त्योपलंभात् । अन्यत्र स्वभावतो वक्रे दंडे दृष्टं दंडवक्रत्वं चक्राकारज्वलत्काष्ठे दृष्टमलातचक्रत्वं चेति तद्वशादन्यत्र तदध्यासोपपत्तिरिति चेन्न

अन्यथाख्यातेर्निराकारणादस्याः शंकाया अनुत्थानात् । तथापि क्वचित्पूर्वानुभवात्तत्संस्कारादिदानींतनवक्रचक्रभ्रमोपपत्तिरिति चेत्, तर्हि इहाप्यस्ति पूर्वानुभवस्तत्संस्कारश्चेत्यध्यासदर्शनादेव कल्प्यत्वात् । यथाचैकस्मिन्नेव नभसि पूर्वदिनेष्वनुवृत्तनभोनैल्यानुभवसंस्कारापेक्षयोत्तरोत्तरदिनेषु नभोनैल्यभ्रमस्तथा पूर्वपूर्वाहंकाराद्यनात्मसंभिन्नात्मानुभवापेक्षयोत्तरोत्तरतदध्यास उपपद्यत इति नानुपपन्नं किंचित् । ×
एतेनात्मानात्मनोः प्रत्यक्पराग्भावेन विषयविषयिभावेन च विरुद्धस्वभावयोस्तमःप्रकाशवदितरेतरभावानुपपत्तावनयोःसधर्मयोरन्योन्यस्मिन्न-

---

× आत्मानात्मनोश्चिदचित्त्वेन वास्तवाभेदासिद्धौ, सामानाधिकरण्यात्तदभेदधीरध्याससंभावनां निगमयति ।

शंकाः—सादृश्यादिरहितस्य निरंशस्य प्रतीचोऽविषयिणः कथमध्यासाधिष्ठानत्वं लोके सदृशसावयवपराग्विषयाणामेव शुक्त्यादीनामधिष्ठानत्वदर्शनात् ।

उत्तरः—उपचारो व्यवहार स्तत्सामर्थ्याच्चिद्रूपेऽप्यात्मनि तत्सर्वं सुवचं । तथा ह्यन्तःकरणस्य देहेन्द्रियापेक्षया प्रत्यक्त्वं स्वच्छत्वं सूक्ष्मत्वं चास्ति चैतन्यसादृश्यं, सांशत्वमपि चैतन्यस्याविद्यावशादखण्डस्यापि जीवत्वब्रह्मत्वाद्यात्मकमस्ति, पराक्त्वमपि साभासान्तःकरणं तदविविक्तत्वेन स्पष्टीभावाद्विषयतामिवाऽपन्नस्य शक्यमुत्प्रेक्षितुमनादित्वाच्च पूर्वपूर्वापेक्षया सर्वमिदमुत्तरोत्तराध्यासे शक्यसमर्थनम् । एतेन करणदोषप्रमातृदोषावपि संभावितौ व्याख्यातौ । एवमात्मन्यनात्माध्यासेऽपि दोषसंप्रयोगयोः संभवादुक्तांशद्वयवत्तया विषयत्वाधिष्ठानत्वयोरपि संभवात्संस्कारस्य पूर्वपूर्वभ्रमजन्यस्य सुलभत्वान्नासंभावनेहाप्यध्यासस्य।

एतच्चाभ्युपेत्योक्तं वस्तुतस्त्वपरोक्षाध्यासेऽधिष्ठानापारोक्ष्यं तन्त्रं न तु सादृश्यादि । न च निरंशे स्वप्रकाशात्मनि सर्वात्मनावभासादध्यासायोगः । पूर्वपूर्वाहंप्रत्ययतत्संस्काराभ्यां विषयीकृतस्यात्मनः काल्पनिकसांशत्वप्रतीत्या प्रतीतिवशादधिष्ठानत्वसम्भवात् ।

ध्यासासंभव इत्येतन्निरस्तं, वास्तवेतरेतरभावाभावेपि कल्पितस्य तस्यो-पपादनात् क्वचित्पूर्वानुभूतस्य विद्यमानमपि परमार्थत्वं नाध्यासप्रयोजकं किन्तु तदनुभवमात्रमेव प्रयोजकं केवलव्यतिरेकाभावादन्यथाख्या-तेरनंगीकाराच्चेति ।

## ( अध्यासे प्रमाणम् )

नन्वेवं संभावितोप्यात्मन्यनात्माध्यासः किंप्रमाणकस्तद्वक्तव्यं येनायं प्रतीतिपथमवतरेत् । नहि संभावनामात्रेण विनाप्रमाणं वस्तु-सिद्धिः तस्याः सर्वत्र केनाप्याकारेण कर्त्तुं सुकरत्वात् प्रमाणवैयर्थ्या-पत्तेरिति चेत् । प्रत्यक्षानुमाने ऽर्थापत्ती चाऽत्मानात्मनोरितरेतरा-ध्यासपूर्वकत्वेन प्रमात्रादिव्यवहारप्रवृत्तौ प्रमाणानीति वक्ष्यामः * तदर्थमिदमिदानीं निरूप्यते । तथाहि । यस्याविद्ययावृतं तत्त्वं तास्मिन् विक्षेप इति हि स्थितिः । आवृतब्रह्मतत्त्वश्चायमविद्ययात्मेति प्रतिपा-दितं । अविद्याचानादिः । असंगे कूटस्थेचात्मन्यन्यतःसिद्धाविद्यासंबं-धानुपपत्तेश्चिन्मात्रेसाक्षिण्यध्यस्ततयैव तस्याःसिद्धिः । तयाविना ऽत्मनि संसारानिरूपणात् संसारस्य चानादित्वादन्यथाऽकृताभ्यागमादिप्रसंगा-च्चास्या अनादित्वसिद्धिः । अस्याश्च प्रकृतित्वमनन्ताविक्षेपशक्तिम-त्वात् । तथाचानंतविक्षेपशक्तिमदनाद्यनिर्वचनीयमज्ञानं चिदात्मव्याप्तं

---

* जडस्याहंकारस्य सच्चिदात्मनि तादात्म्याध्यासाभावे सत्तास्फूर्त्योरसंभवा-च्चिदात्मनश्च कूटस्थस्याहंकारे तथाध्यासाभावे कर्तृत्वादिविकारवत्त्वावभासायोगा-त्परस्परस्मिन्नध्यस्तं भवति । अन्यतरस्मिन्नन्याध्यासपक्षेऽनात्मन आत्मन्येवाध्यासे तस्य विषयत्वेनावभासो न स्यादात्मनश्चानात्मात्मनाऽध्यासे तस्यापि जडत्वापत्तौ जगदान्ध्यप्रसङ्गः । इतरेतराध्यासे तूभयोरप्युभयात्मनाऽवभासान्नोक्तदोषप्रसंग इति भावः ।

तद्बलनिर्भासितितया लब्धसामर्थ्यं सत् कूटस्थेप्यात्मनि जाग्रदादिभोगफलोन्मुखाद्दृष्टादिनिमित्तवशात् प्राचीनानात्मानुभवसंःकारोद्बोधं सहकारिणमासाद्य कदाचिदंतःकरणशब्दवाच्यविशेषावस्थं जायते, यथा स्वभावनिर्भले निश्चले जले वाय्वाद्युद्बोधितसंस्कारस्तद्गतो भावविशेषः स्वानुगतजलव्याप्ततया तदात्मतामापन्नस्तरंगादिशब्दवाच्य विशेषावस्थामापद्यते तद्वत् । तस्मिंश्चाज्ञानावस्थाविशेषे तरंग इव सविता, निर्विशेषोप्यात्मा विशेषतः परिस्फुरन्नहमस्मीति प्रथममात्मानमनुभवति सोहमस्मीत्यग्रे व्यवहरन् । एवमयमहंकाराध्यासः सर्वकार्याध्यासानां प्रथमः । एतन्मूलश्चात्मनः सर्वोपि संसारविकारो ऽभिमानमूलो हि सः। अभिमानश्चाहंकारः । नहि विनाहंकरणमात्मनि संसरणमुपलभ्यते सुषुप्त्यादावदर्शनात् । अयंच स्वसत्तायामात्मतत्त्वानवभासाव्यभिचारित्वादात्माज्ञानकृतोऽध्यस्त इति चोच्यते ।

ननु कथमहंकाराध्यासस्य प्राथम्यं यावता ऽत्मन आकाशः संभूत इत्यादि श्रुतावाकाशाध्यासस्य प्राथम्यं श्रूयते, अवश्यं चैतदभ्युपगंतव्यमन्यथा ऽकाशादिपरंपरया परिनिष्पन्नपञ्चमहाभूतसंघातरूपस्थूलसूक्ष्मकार्याभावादभिमन्यमानाभावेनाभिमानस्य निर्विषयतया ऽनुत्थानादिति चेत्, सत्यमस्ति सृष्टिप्रक्रियायामाकाशस्य प्राथम्यं, सृष्टिप्रक्रिया च परिणामदृष्टिमाश्रित्य कार्यकारणानन्यत्वन्यायेन लोकदृष्टसाधर्म्येण ब्रह्माद्वैतप्रतिपत्त्युपायभूता । विवर्त्तदृष्ट्या तु नेयं प्रक्रिया । तस्यांतु प्रथममहंकारस्यैव विवर्त्त इति न विरोधः कश्चित् ।

तस्मादहमिति प्रथमोध्यासः । स च मनोवुद्धिरहंकारश्चित्तमिति स्वपरिणामविशेषैरध्यात्ममधिदैवमाधिभूतं च भूतंभवंतंभविष्यंतं

बाह्यमांतरं विप्रकृष्टं संनिकृष्टमित्याद्यनेकविधमर्थमात्मनि कल्पयंश्चिदात्मनः संसारित्वमापादयति तेन च चिदात्मा स्वतो भेदरहितोपि संसार्यसंसारिभावेन जीवः परमेश्वर इति च व्यवहारभाग् भवति, अनेनैवोपाधिना पूर्वानुभूतसदृशं देहद्वयं तत्संस्कारादात्मन्यध्यस्याहंमनुष्यो देवः पशुरिति काणोहं द्रष्टा वधिरः श्रोता बुभुक्षितः पिपासितः शोचामि दुष्यामि सुखी दुःखीति चैवमादिप्रकारै र्व्यवहारभाग् भवति न स्वतः।

ननु देहद्वयस्यागमापायित्वाद्यथायथं रूपादिमत्वाच्च चैतन्यात्मनो बहिरुपलंभाभावादयंदेहइदंचक्षुरित्यादिरूपेण द्व्याकारावभासाच्चाध्यस्ततास्तु, अहंकारस्य तूक्तस्वभावविलक्षणत्वात् सर्वावभासकतया चैतन्यरूपत्वाच्च कथमध्यस्तस्वरूपत्वमिति चेत् । मैवं । आत्मस्वभावविलक्षणरूपताया अस्मिन् विवेकिनामनुभवसिद्धत्वात् । तथाहि ।

कार्यत्वाद्विक्रियावत्वात्पराधीनप्रकाशतः ।
नात्माहंकार आत्मा तु निरपेक्षोह्यविक्रियः ।

अहंकारस्य सुषुप्तावभावादवस्थान्तरे च भावादागमापायित्वं तावत्सिद्धं । सुषुप्तावपि संस्कारशेषेणाहंकारावस्थानमस्तीति चेत् । तर्हि सिद्धं नः समीहितमहंकारस्यानात्मत्वमिति, अकार्यस्य संस्काराभावादात्मनश्चाकार्यत्वात् । आत्मनः स्वाभाविकब्रह्मस्वरूपानवभासदशायां जाग्रदादिलक्षणायामेवास्य स्फुरणादविद्योपादानकत्वमहंकारस्यास्ति, आत्मनस्तु सर्वावस्थासाक्षित्वादविद्यासाक्षित्वाच्चानादित्वान्नोपादानापेक्षा । अयं च कामः संकल्प इत्याद्यनेकप्रकारपरिणामवत्वाद्विकारवान् । आत्मात्वस्य सर्वपरिणामसाक्षित्वात् कूटस्थोऽन्यथा तस्यापि परिणामित्वे तत्परिणामसाक्ष्यन्यः कल्प्येत परिणामिनोन्यसाक्ष्यत्व-

नियमात् । तथाचानवस्था । अनेन सर्वावभासकतया चैतन्यस्वरूपत्व-महंकारस्यापास्तं । परिणामिनोन्यसाक्ष्यत्वानियमात् । तथाचाहमि-त्येकाकारावभासेपि स्वानुगतचिदंशेनावभास्यत्वादिदंरूपताऽनात्मलक्ष-णाऽस्य सिद्धा । चैतन्यभास्यत्वमेवानात्मत्वलक्षणं नत्विदंतदित्यादिरूपे-णावभासमानत्वं, तथासत्यहमित्यवभासमानस्य देहस्यानात्मत्वाभा-वप्रसंगात् । ननु मम देहोयंदेह इति चास्ति विवेकिनां देहेऽवभास इति चेत् । अत्रापि ममाहंकारो नष्टोयमहंकारो दुःखहेतुरिति विवेकि-नामवभासस्तुल्यः । तथा सर्वान्तरे चिदात्मनि रूपान्तरव्यवधानमन्त-रेणास्याध्यासादनिदमात्मकताप्यस्य प्रतिभासत एव सिद्धा न लक्ष-णतः । एवं च सत्यहंकारे यथोपपादितो द्व्याकारावभासोपि विद्यत इति सिद्धमस्यापि देहादिवदध्यस्तत्वं । ⁘

⁘ अहमुपलभ इति प्रकाशस्वभावोपलब्ध्याश्रयत्वं तैजसस्यान्तःकरणस्यानुपप-न्नमात्मनो धर्म स्तस्यैवाद्वितीयस्य धर्मधर्मिभावोपपादक परिणामाश्रयत्वमात्मन्य-नुपपन्नमन्तःकरणस्य तथा परमप्रेमास्पदत्वेन सुखरूपस्यात्मनो दुःखत्वमनुपपद्य-मानो धर्म्यन्तरं कल्पयति प्रमातृप्रमाणविषयफलेष्वनुस्यूतचिद्रूपमहमिति व्यावृ-त्तरूपञ्च तथा कामादिरूपेण परिणामिरूपं तदागमापायद्रष्टृरूपञ्च; एवं सर्वा-नुभवसिद्धे द्विरूपावभासे तदभावाभिधानं साहसमात्रम् ।

[ अद्वैतभूषणं = ब्रह्मसूत्रभाष्यव्याख्या ]

अहमित्येतावन्मात्रानुभवो नास्त्येव किन्त्वहमुपलभ इत्यादिरूपोऽहम-न्तर्भावस्तथाच यथाऽयो दहतीत्यनुभवे दहतीति दग्धृत्व अय इति दाह्यांशश्च स्फुरति तथा ऽहमुपलभ इत्यनुभव उपलभ इत्युपलब्धंशो ऽहामिति च उपल-भ्यजडांशः स्फुरतीत्यहमुपलभ इत्यनुभवविशेषमादायाहमर्थस्याध्यासरूपत्वं संगच्छते । [ भाष्यरत्नप्रभाया व्याख्यानं ]

अहंकार आत्मन्यध्यस्तो यतः सो ऽधिष्ठानाद्विपरीतः सन् तदभिन्नत्वेन प्रतीयते । यो यो विपरीतरूपः सन् तदभिन्नत्वेन प्रतीयते स तत्राध्यस्तो भवति यथेदं रजतम् ।

एवंस्थितेऽस्यात्मनः प्रमातृत्वादि परोपाधिनिबंधनमेवेत्येतदधुनोच्यते ।

प्रत्यक्षमनुमानं च श्रुतार्थापत्तिरेवच ।
चिदात्मनि प्रमात्रादेरध्यस्तत्वप्रसाधकम् ।

विषयेषु व्याप्रियमाणमिन्द्रियं हि प्रमाकरणत्वात् प्रमाणव्यवहारालम्वनं भवति, इन्द्रियं च देहमाश्रयं विना न स्वात्मलाभवद्भवति, देहश्चाचेतनो नाधिष्ठातारमंतरेणेन्द्रियाश्रयभावं भजत इत्येतत् सर्वेषामविवादं । तत्र संघाताधिष्ठातुरात्मनः संघातस्य च संवंधमन्तरेणाधिष्ठात्रधिष्ठेयभावायोगात् स वक्तव्यो येन चिदात्मनः प्रमातृत्वसिद्धिः । विचार्यमाणेऽयमाभिमानिक एव संवंधः । अभिमानश्चाध्यास इत्याध्यासिकः सम्वन्धः । तथाहि । संयोगस्तावन्नात्मनः प्रमातृत्वानुवन्धी तस्य सर्वशरीरेन्द्रियादिषु काष्ठलोष्टादिषु च तुल्यत्वेन सर्वत्र प्रमातृत्वादिप्रसंगात् परैरात्मनः सर्वमूर्त्तसंयोगित्वेन व्यापकत्वांगीकारात् सुषुप्तावपि परमते देहेन्द्रियमनःसंयोगस्यात्मन्यनपायात् प्रमातृत्वादिप्रसंगः । निरवयवस्यासंगस्यात्मनःपरिपूर्णस्य संयोगोपि दुर्भण एव। सह्येकदेशेन वा स्यात् सर्वात्मना वा । नाद्यो निरवयवस्यैकदेशाभावात् । स्वतो निरवयवत्वेपि परोपाध्यवच्छिन्नः प्रदेशः संभवतीति चेत् । न, उपाधिसंवंधस्यापि तुल्ययोगक्षेमत्वात्, तथाच सिद्ध एकदेश उपाधिसंवंधासिद्धिस्तत्सिद्धावेकदेशासिद्धिरित्यन्योन्याश्रयापत्तेश्च । तस्मान्नैकदेशवृत्तिः संयोगः संभवति । नापि द्वितीयः, संघातात्मनोस्तुल्यपरिमाणत्वापत्तेः, नहि संघातस्यात्मव्यापित्वाभावे तन्निरूपितसंयोगस्यात्मव्यापित्वमुपपद्यते । नह्ययःपिंडैकदेशसंवद्धेन वह्निना सर्वायःपिण्डसंयोगो निरूप्यते, तथासत्यग्रभाग इव मूलेप्यौष्ण्यप्रसंगात् । तस्मात्

सर्वात्मनापि न संयोगः। न समवायोपि युज्यते, संघातचिदात्मनोरयुतसिद्ध्यभावात्। नात्र तादात्म्यमपि द्रवकठिनयोरिव जडाजडयोर्विरोधादेव तदयोगात्। संबंधान्तरस्यैतत्संबंधत्रयोपजीवनेन प्रवृत्तेरेतदभावेऽनुपपत्तेः। परिशेषादाभिमानिकः संबंधः संघातात्मनोर्दक्तव्यः। अतएवाभिमानाभावात् सुषुप्त्यादौ प्रमातृत्वाद्यभावः। तस्मात् देहेन्द्रियादिष्वभिमानवतः प्रमातृत्वं सर्वेषां व्यवहर्तॄणां प्रत्यक्षं। अयं च व्यवहारोऽविद्यावत आत्मनस्तत्परिणामरूपाहंकारादावात्मत्वाभिमाननिवन्धनस्तेन विनास्य प्रवृत्त्यदर्शनात्।

ननु प्रमाता चेदविद्यावांस्तदा तस्य भ्रान्तत्वापत्तेः प्रमातृत्वव्याघातः, प्रमाणेन योर्थं प्रमिणोति स खलु प्रमाता तथाच प्रमित्याश्रयोभ्रान्तश्चेति व्याघात इति चेत्। न, अस्या प्रमितेरविद्यावदाश्रयत्वाव्यभिचारात्। अहमिदं जानामीति हि प्रमातृत्वमनुभवति, तत्र जानातिक्रियाव्याप्य कर्मकारकमिदमित्युल्लिख्यते जानामीति ज्ञानक्रिया, अहमिति प्रमातेति प्रसिद्धं। अत्राहमित्यहंकारः पूर्वोक्तश्चिदाचिद्ग्रन्थिरूपः प्रमाश्रयत्वेन व्यपदिश्यते न शुद्धआत्मा तस्मिन्निर्विशेषे परिपूर्णे स्वयंप्रकाशज्ञानस्वरूपे देहादिविशेषवत्तया परतोव्यावृत्तात्मनाऽसाधारणाकारेणागमापायितया चिदवभास्यत्वेन चाहमित्याकारेण निर्भासानुपपत्तेः +

---

+ अहंकारस्याध्यस्तत्वे प्रमितेराश्रयत्वमनुपपन्नमिति न वाच्यं यतो ऽध्यस्तस्यैव प्रमितेराश्रयत्वं भवति। अत्र विवेचनीयं, प्रमा पदेन किं चैतन्यमात्र विवक्षितं किंवा वृत्तिरुत वृत्तिसंवलितचैतन्यं। नाद्यः तस्याजन्यत्वात् चैतन्यस्य प्रमातृत्वमनुपपन्नं, सन्निकर्षादिप्रमाणजन्यस्यैव प्रमात्वं भवति। नापि द्वितीयः। केवलवृत्तेर्जडत्वात् प्रमाणफलत्वं न स्यात्। अर्थप्रकाश एव प्रमाणफल प्रमा

तस्मादहमुपरक्तचैतन्याभासाविवेकाच्चिदात्मनि प्रमातृत्वमुपचर्यत इत्यनुभवमेवालोच्य प्रत्येतव्यम् ।

ननु क्वचिन्मुख्यं क्वचिदुपचर्यते तदिह प्रमातृत्वाद्यात्मनि न चेन्मुख्यं तज्जडेऽन्तःकरणादावपि न मुख्यमन्यत्र च नास्य प्रसंगोस्ति, अतः कथमुपचार इति चेत् । सत्यं परमार्थतः क्वापि न मुख्यमस्ति यतोत-एवाध्यस्तत्वमस्य सिद्धं । अध्यासश्च सत्यमिथ्यार्थसंभेदात्मक इति सत्यानृत चिदात्माहंकारसंभेदे प्रमातृत्वादि मुख्यं तस्याधिष्ठाने चिदा-त्मनि तदुपचर्यते । यत्रैव यो व्यवहारोऽविसंवादितयावधारितः स तत्र मुख्यो, यत्र पुनस्तदनुषंगात् कदाचित् प्रतीयते तत्र गौण इति स्थितिः। तदिह प्रमातृत्वादेर्यथोक्ते ऽहंकारे विसंवादाभावात् तत्र मुख्य, आत्मनि तु केवले तदनुरक्तदशायामेव व्यवहारात् तदनुरागाभावे सुषुप्त्यादावभावात तत्रौपचारिक इति ।

---

शब्दैन च व्यपदिश्यत अतः तृतीयपक्षः परिशिष्यते । चैतन्यस्य स्वयंप्रकाश-त्वात् स्वरूपतो ऽजन्यत्वेपि वृत्तिसंवलिताकारेण जन्यत्वं भवति ।

शंकाः — तदेवानध्यस्ताहंकाराश्रयो भवतु ।

उत्तरः—इति न वाच्यम् । अत्र प्रष्टव्यो—अहंकारश्चैतन्याचैतन्योभयरूप एकरूपो वा । अन्त्येपि स जडरूपो वा चैतन्यरूपो वा । नाद्यः जडस्य जडवृत्तिराश्रयत्वेपि चैतन्याश्रयत्वमनुपपन्नं । नापि द्वितीयः। अविकारिचैतन्यस्य विकाराश्रयत्वमनुपपन्नं । परिणामस्य च नियमेन परिणाम्याश्रितत्वं भवति । एषा वृत्ति र्न केवलचैतन्यपरिणामः, चैतन्यपरिणामस्य जडत्वमनुपपन्नं ।

शंका:—अहंकारस्तर्हि उभयरूपोऽस्तु ।

उत्तरः—उभयरूपत्वं वास्तवं न संभवति । जडाजडरूपेण विरुद्धस्य वास्तवतादात्म्यमनुपपन्नं । अतो ऽध्यस्तात्मभावो ऽहंकार इत्यभ्युपगन्तव्यः ।

एतेन ज्ञानाश्रयत्वेनात्मत्वमिति पक्षोऽपि निरस्तो वेदितव्यः ।

अनुमानमपि विमतः प्रमातृत्वादिव्यवहार आत्मन्यविद्याध्यस्ता, अहंकारोपाधिनिवन्धनस्तदन्वयव्यतिरेकानुविधायित्वात्, यो यदन्वयव्यतिरेकानुविधायि तत्तन्निवन्धनो यथाग्नेश्चतुरश्रवर्त्तुलत्वादिरयःपिंडादिदाह्यसंसर्गनिवन्धनः तथाचायं तस्मात्तथेति । अर्थापत्तिरपि यथोक्ताध्यासाभावेनुपपत्तिरुक्तव्यवहारस्य। जीवत्वोपाध्यहंकारकञ्चुकप्रवेशद्वारा प्रत्यगेकरसचित्सदानन्दात्मन एतद्देहादिधर्मानात्मन्यध्यस्याहं ब्राह्मणः क्षत्रिय इत्याद्यभिमन्यमानस्य कर्मोपासनादिक्रियास्वाधिकारात् तत्कर्तृत्वं भोक्तृत्वमहंकारकंचुकारोहादेव इति न वैय्याधिकरण्यमस्मिन्पक्षेस्ति । तस्मादप्यविद्याप्रापित देहाद्यध्यासतः प्राप्ताधिकारस्यात्मनः कर्मविधानात् शुद्धात्मनि देहादौ तद्विशिष्टे वा तद्विधानानुपपत्तेः श्रुतार्थापत्तिरपि प्रमातृत्वकर्तृत्वाद्यध्यासे प्रमाणमिति । तस्मात् प्रमातृत्वादेरात्मनि दृश्यमानस्य तत्स्वरूपब्रह्माज्ञानाविद्यामय एव । ×

---

× प्रमाणजनितज्ञानाकारपरिणामी प्रमाता नाम । न च निर्विकल्पकचिन्मात्रात्मनः परिणामसम्भवः, नापि केवलजडवुद्धेरनध्यस्तायाः प्रकाशाभासपरिणामः । तस्मादविद्यात्मनारितरेतराध्यासविलसितः प्रमाता स चेन्द्रियाद्यधिष्ठाता। इतरथा तेषां करणत्वमस्य कर्तृत्वं च नोपपद्यत इति। नच तेष्वहंममाभिमानहीनस्य तदधिष्ठातृत्वमस्ति परकरणेष्वदर्शनात् । नचासंगस्याविद्याध्यासमन्तरेण तादृगभिमानसंभवः । प्रमाणप्रमेययोः सम्वन्धस्य चाध्यासिकत्वमधस्तादेवोपपादितः। प्रमातृत्वस्य प्रमाणप्रमेयसम्वन्धस्य चाविचारितरमणीयानाद्यविद्यासम्वन्धमन्तरेणासिद्धः ।

अयमर्थः—प्रमातृत्वं हि प्रमां प्रति कर्तृत्वं, तच्च स्वातन्त्र्यं । स्वातन्त्र्यं च प्रमातुरितरकारकाप्रयोज्यस्य समस्तकारकप्रयोक्तृत्वम् । तदनेन प्रमाकरणं प्रमाणं प्रयोजनीयं । नच स्वव्यापारमन्तरेण करणं प्रयोक्तुमर्हति। नच कूटस्थनित्यश्चिदात्मा ऽपरिणामी स्वतो व्यापारवान्। तस्माद्व्यापारवद्बुद्ध्यादितादात्म्याध्यासात्

व्यापारवत्तया प्रमाणमधिष्ठातुमर्हतीति भवत्यविद्यावत्पुरुषविषयत्वमविद्यावत् पुरुषाश्रयत्वं प्रमाणानामिति । निर्व्यापारे चिदात्मनि प्रमाणप्रेरणं व्यापारः परोपाधिरध्यस्त इति प्रमाणानामविद्यावत्प्रेर्यत्वमित्यर्थः । एवं प्रमाणप्रेरकत्वेनाध्यासं समर्थितं भवति, इदानीं प्रमाश्रयत्वेनापि समर्थ्यते । अवश्यं चाध्यासाश्रयाणि प्रमाणानि । न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति। प्रमायां खलु फले स्वतन्त्रः प्रमाता भवति । अन्तःकरणपरिणामभेदश्च प्रमेयप्रवणः कर्तृस्थश्रितस्वभावः प्रमा । कथं च जडस्यान्तःकरणस्य परिणामश्चिद्रूपो भवेत् यदि चिदात्मा तत्र नाध्यस्येत । कथं चैष चिदात्मकर्तृको भवेत् यद्यन्तःकरणं व्यापारवच्चिदात्मनि नाध्यस्येत् । तस्मादितरेतराध्यासाच्चिदात्मकर्तृस्थं प्रमाफलं सिध्यति । तत्सिद्धौ च प्रमातृत्वम्, तामेव च प्रमामुररीकृत्य प्रमाणस्य प्रवृत्तिः। प्रमातृत्वेन च प्रमेोपलक्ष्यते । प्रमायाः फलस्याभावे प्रमाणं न प्रवर्तेत तथाच प्रमाणमप्रमाणं स्यात् । चिदचिद्रूपसंवलितप्रमाया आश्रयप्रमातापि तत्स्वभावो भवितुमर्हति, नच चिदचित्संवलनमध्यासमन्तरेणेति संभवन्ति प्रमाणान्यध्याساश्रयाणि । तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि ।

———

# क्रोडपत्रः ।

## [ पृष्ठ ६० ]

शंकाः—किंगतमज्ञनं? न तावत् ब्रह्मगतं, तस्मिन्नज्ञानासंभवात्-नापि जीवगतं, तस्यापि सदा स्वयंप्रकाशज्ञानरूपत्वात् तद्विरुद्धस्याज्ञानस्य तस्मिन्नसंभवात् ।

समाधानः—न ब्रह्मगतं नापि जीवगतमज्ञानमिष्यते किन्तु जीवेश्वरविकल्पास्पदचिन्मात्रगतं, तथाच जीवेश्वरयोः पृथगज्ञानाश्रयत्वदूषणमिष्टमेवेति न तन्निराकरणाय यत्यते ।

शंका—तस्मिन्नज्ञानासंभव उक्तोऽज्ञत्वभ्रान्तत्वयोरज्ञानित्वलिंगयोस्तस्मिन्नसंभवात् ।

समाधान—तस्मिन्नेव तदुभयं संभवति नान्यत्रेति वदामः। यस्याज्ञानं भ्रमःस भ्रान्तः सम्यग् वेत्ति स इति न्यायेन अज्ञानभ्रान्तिसम्यग्ज्ञानानामेकाश्रयत्वं तावदेष्टव्यं । तत्र न तटस्थस्य ब्रह्मण एतत्त्रयं संभवति । नापि जीवाख्यस्याहंकारानुगतस्य प्रतिविम्वकल्पस्याज्ञानाद्याश्रयत्वं संभवति । सुषुप्तिकाले सर्वोपाधिप्रविलयादहंकारस्यापि कार्यत्वात् प्रविलये सति तद्गतजीवस्यापि प्रविलयात् सुषुप्तावज्ञानस्य जीवाश्रयत्वासंभवात् । यद्यपि पुनरुत्थानलिंगेन सुषुप्तावपि जीवसद्भावोवगम्यते तथापि तत्र तस्यापरोक्षत्वाभावादपरोक्षाज्ञानाश्रयत्वं न संभवति । व्यावहारिकजीवोपाधेरंतःकरणस्य सुषुप्तावविद्यायां संस्कारशेषेणावस्थानात् संस्कारात्मनश्चोपाधेरप्रत्यक्षत्वात् तद्विशिष्टजीवोप्यप्रत्यक्ष इति तदानीं जीवत्वमप्रत्यक्षं तत्र जीवाश्रयं चेदज्ञानं तदा तदपि परोक्षमेव स्यात्, अज्ञानस्याश्रयानुषक्ततयैवानुभवादाश्रयपारोक्ष्ये तस्यापि पारोक्ष्यनियमात् ।

शंकाः—अस्तु पारोक्ष्यं सुषुप्तावज्ञानस्य ।

समाधान—मैवं । जाग्रदवस्थायां तत्परामर्शाभावप्रसंगात् । परामर्शो हि स्मृतिः सा चाननुभूते विषये न संभवति तदानीमनुभवसाधनान्तरासंभवात् साक्षिमात्रसिद्धमज्ञानं वक्तव्यं, साक्षिणश्च नित्यापरोक्षस्वभावत्वात् तदनुषंग्यज्ञानमप्यपरोक्षमिति ततः परामर्श उपपद्यते ।

शंकाः—उत्थितस्य न किंचिदवेदिषमिति नायं सौषुप्ताज्ञानपरमर्शः किन्तु तत्रत्य ज्ञानाभावानुमानमेतद् ।

समाधानः—न, अनुमितिसामग्र्या दुर्न्निरूपत्वेनानुमित्यनुदयस्य वृद्धैः प्रतिपादितत्वात् । *

साक्षी च नाहंकारावच्छिन्नोजीव इति न सुषुप्तौ जीवाश्रयमज्ञानमिति चिन्मात्राश्रत्वं चिन्मात्रविषयत्वं चास्य वक्तव्यं । न चास्याश्रयविषयभेदो नियन्तुं शक्यते सुषुप्तौ भेदाभावात् । तथाच जीवेश्वरजगद्विभागाध्यासाधिष्ठानमनादिचिन्मात्रमेवानाद्यज्ञानाश्रयो विषयश्च नाज्ञानाधनिजीवेश्वरजगन्तीति सिद्धं। तदुक्तम्-'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर' इति ।

* धर्मिप्रतियोगिज्ञानं विना सुषुप्तौ ज्ञानाभावस्यानुभवितुमशक्यत्वात् तत्सद्भावे च सुषुप्तिव्याघातः तथाचानुभूयमानस्य षष्ठप्रमाणगोचरत्वानुपपत्तेः, उत्थितस्य च सुषुप्तिदशायां ज्ञानाभावानुमानस्य लिंगाभावादसिद्धेः स्मरणाभावस्यानैकान्तिकत्वेनालिंगत्वात् तदात्मतदज्ञानसामर्थ्यस्य च ज्ञानाभावेन समानयोगक्षेमतया प्रत्येतुमशक्यत्वेन ज्ञानाभावानुमापकत्वायोगाज्ज्ञानाभावेनैव तदनुमाने परस्पराश्रयप्रसंगात् प्रत्यक्षेणैव भावरूपाज्ञानसिद्धेः ।

( चित्सुखाचार्यकृत नैष्कर्म्यसिद्धिभावतत्त्वप्रकाशिका )

भावरूपाज्ञानविषयकः सुविस्तृतविचारः द्वितीयादिभागेषु प्रदर्शयिष्यामः ।

नन्वेवं सति कथमहमज्ञ इत्यनुभवश्चिन्मात्रमज्ञमिति कथं नानुभवः। प्रत्यगेकरसत्वेनैव तस्याज्ञानाश्रयत्वादिति वदामः। नहि निर्विकल्पकचिन्मात्रस्य ब्रह्मात्मनोहंकारकंचुकावेशं विना व्यवहारलेशोपि संभाव्यते। अतोहमज्ञो भ्रान्तोजानामीति च स्फुटतरमंतःकरणपरिणामगतचिदाभासद्वारा सदादिशब्दवाच्यं सर्वाधिष्ठानं चिन्मात्रमेव व्यवहरति। तस्मादज्ञानं प्रत्याश्रयत्वाद्युपाधित्वाभावेप्यन्तःकरणस्य स्फुटतरव्यवहारोपाधित्वमस्तीति चिन्मात्रविषयस्याप्याज्ञानस्याहमज्ञ इत्याद्यनुभवो न विरुद्धयते। इति चिद्गतमेवाज्ञानं। आरोपिताज्ञानाश्रयत्वेपि स्वाभाविक शुद्धत्वादेरनुपहतत्वात्। नह्यारोपितेन मरीच्युदकेन तदाश्रयोषरभूमिरार्द्रीक्रियते। तस्माच्चिन्मात्रस्याविद्याश्रयत्वे न कोपि दोषः।

———

# तृतीयाध्यायः । *

## व्यवस्थाप्रदर्शनं ।

जागरणं नामेन्द्रियैरात्मनो विषयोपलंभः प्रसिद्धः ।

कथमात्मनो विषयोपलभ इति । किमयमाक्षेपः किंवा प्रश्नः । तत्राद्योनुपपन्नः सर्वेषां प्राणिनामनुभवसिद्धत्वात् । द्वितीये प्रश्नस्य वीजं प्रकटीक्रियतां । वादिविसंवादात् कया प्रक्रियया चिदात्मन इन्द्रियैर्विषयग्रहणं वेदान्त्यभिमतमिति संशय एव प्रश्नवीजमिति चेत् । तर्हि विसंवाद एव वादिनां कीदृश इति पृथक् पृथङ्मतोपन्यासः क्रियतां, तदनन्तरं तत्र सारासारविवेकेन वेदान्तप्रक्रियां प्रदर्शयिष्यामः।

### ( विषयग्रहणे पूर्वपक्षप्रदर्शनं )

तत्र सांख्या मन्यन्ते । शब्दस्पर्शादयो विषयाः श्रोत्रादिभिरिन्द्रियैर्यदा संवद्धयते तदा वुद्धिः श्रोत्रादीन्द्रियद्वारा विषयमभिव्याप्य विषयाकारेण चिह्निता जायते, तंच स्वगतं विषयमुद्राकारमात्मनि पुरुषाख्ये समर्पयति सैव वुद्धिः, तथाच मुद्रामुद्रित प्रतिमुद्रान्यायेन विषयमुद्रितायां वुद्धौ संक्रान्तःपुरुषो विषयसंवंधितया विषयमनुभवतीति। तार्किकाः पुनरन्यामेव प्रक्रियामारचयंति । अर्थैरिंद्रियाणां संयोगोर्थसंयुक्तेन्द्रियैर्मनसो मनसाचात्मन इति संयोगपरंपरायां संपन्नायां

---

* आत्मानात्मनो विरुद्धस्वभावप्रतिपादनानन्तरमेव तयोः सम्बन्धविषयकः प्रश्न उत्थापनीयः। आत्मनः साक्षित्वे, ऽहंकारातिरिक्तत्वे, स्वप्रकाशत्वे, कूटस्थत्वे च सिद्धे सत्येवाध्याससमर्थनं भवति । अतएव प्रथमाध्याये साक्षिस्वरूपविवेचनानन्तरं द्वितीयाध्यायेऽध्यासवादः प्रकटीकृतः । अध्यासवादे प्रतिकर्मव्यवस्थादिकं कथं संगच्छत इति जिज्ञासायां तृतीयाध्यायोऽयमारभ्यते ।

देहावच्छिन्नात्मप्रदेशे विषयज्ञानमुत्पद्यत इति । मीमांसकैकदेशिनोपीमां प्रक्रियां मन्यंते। तेषां ज्ञानं स्वयंप्रकाशं तार्किकाणां परप्रकाश्यमिति परं विशेषः । भाट्टाः पुनरर्थेन्द्रियमनसां संयोगे प्रत्यगात्मा विषयज्ञानात्मना परिणमते द्रव्यबोधरूपत्वांगीकारादात्मन इति कल्पयंति। नास्तिकाश्च गोलकातिरिक्तमिन्द्रियमनंगीकुर्वाणा इन्द्रियगोलकासंबद्धेप्यर्थे ज्ञानमर्थाकारं जायते, तच्च देहपरिणामरूपमिति लोकायतिका मन्यंते । प्रवृत्तिविज्ञानं नाम नीलादिविषयज्ञानं तच्चालयविज्ञानसंताने यदाकदाचिदुत्पन्नं यत्पूर्वज्ञानं तन्निमित्तकमधिपतिसहकार्यालंबनप्रत्ययै र्जन्यत इति बौद्धाः केचिदाचक्षते । तत्रालयविज्ञानं नामाहंप्रत्ययरूप आत्मा । समनंतरप्रत्ययो मनः । अधिपतिप्रत्ययश्चक्षुरादिः। आलंबनप्रत्ययो विषयः । सहकारिप्रत्यय आलोकादिः । एतैश्चतुर्विधैः प्रत्ययैरुत्पद्यमानं विषयाकारोपप्लुतं ज्ञानं प्रवृत्तिविज्ञानमिति गीयत इति । एवमन्येपि स्वस्वमतानुसारेण विषयग्रहणस्य स्वरूपोत्पत्तिसहकारिभेदान् कल्पयन्ति । तत्र न सर्वेषामपि कल्पना यथार्थेति निश्चेतुं शक्यते, परस्परविसंवादादेकविषयत्वेन व्यवस्थाऽसंभवात् वस्तुविषयत्वेन विकल्पासंभवाच्च । तस्मादेषामन्यतमस्य प्रक्रिया वेदांत्यभिमतान्यैववेति संदेहात् प्रश्न इति ।

### ( पूर्वपक्षखण्डनं )

अत्रोच्यते । उपन्यस्तानामासां प्रक्रियाणामन्यतमापि प्रक्रिया नास्माकं संमता किंत्वाभ्योन्यैव । तस्याएवानुभवारोहात् । यस्मादेताः पूर्वोक्तप्रक्रिया अनुभवविबाधितास्तस्मान्न तास्वस्माकं श्रद्धास्तीति। ननु कथं प्रावादुकानां प्रक्रिया अनुभवविबाधिता युक्त्या प्रतिष्ठापितत्वादिति चेत् ।

## ( सांख्यमतखण्डनं )

अत्र वदामः ।

सांख्यानां प्रक्रिया तावदयुक्ता तन्मतक्षतेः ।
तत्र मानस्यचाभावाद्युक्तिभिश्च विबाधनात् ।

तासु प्रक्रियासु सांख्यानां प्रक्रिया न युक्तिमती । विषयमुद्रितायां बुद्धौ पुरुषसंक्रमणे पुरुषे वा बुद्धिसंक्रमणे पुरुषस्य विकारित्वापत्तेः, निर्विकारासंगोदासीनः पुरुष इति स्वमतभंगप्रसंगात् । संक्रमणं नाम यदि राशेः सूर्यादिग्रहस्य राश्यंतरप्रवेशवद् द्युच्छायाभिपत्ति र्यदिवाऽपादतलमस्तकं विषप्रसर्पणवदवयवशो व्याप्तिरथवाऽयःपिण्डेऽग्निवदेकीभावः सर्वथापि पुरुषस्य विकारित्वादिदोषप्राप्तिर्दुष्परिहरा । अर्थान्तरमितो न संक्रमशब्दस्योपपद्यते, तस्मादस्मिन्मते स्वमतक्षतिः स्पष्टा । ननु संक्रमशब्देन विषयमुद्रितायाबुद्धेर्दर्शनमात्रमभिधीयते तच्च तस्य स्वाभाविकमिति कुतः पुरुषस्य विकारित्वप्रसंग इति चेन्न विकल्पासहत्वात्। किं पुरुषस्वरूपं ज्ञानं स्वसंबद्धां विषयमुद्रितां बुद्धिं प्रकाशयेत् स्वासंबद्धां वा । नाद्यः संबन्धासंभवात् । नहि निरवयवस्यासंगोदासीनस्य केनचित् संयोगादिरुपपद्यते स्वभावविरोधात् । न द्वितीयोऽतिप्रसंगात् । सन्निधानमेव संबंध इति चेत् । किमिदं सन्निधानं नाम समानदेशत्वं वा मिथः सन्मुखभावो वा एकतापत्तिर्वा । नाद्यो, रूपरसादिवत् बुद्धिपुरुषयोरेकाश्रयत्वानुपपत्तेः । न द्वितीयो, व्यापकस्यपुरुषस्याव्यवधानाद् दंपत्योरिव संमुखीभावासंभवात् । न तृतीयो यदि दंपती इव वाग्न्ययःपिण्डवद्वा परस्परयोगेनैकतापत्तिस्तदा पुरुषस्य विकारित्वादिदोषप्रसंगात् । नापि कुंडे बदरवत् भित्तौ चित्रवद्वा आधाराधेयभावः

सन्निधानं, असंगत्वाभ्युपगमविरोधात्। किंचात्र प्रमाणमपि न पश्यामः। नहि वुद्धिपुरुषसंक्रमणेन पुरुषस्य विषयावभासो जायत इत्येतत् प्रत्यक्षं कस्यचिद्भवति। नाप्यनुमानमत्र संभवेत्, व्याप्तिग्रहस्थलाभावात्। विषयालोकयोर्व्याप्तिग्रह इति चेन्न, तयोः सावयवत्वात् गतिमत्वाच्च संक्रमणोपपत्तावपि तद्रहिते पुरुषे तदनुपपत्तेः। विषयप्रतीत्यन्यथानुपपत्त्या संक्रमणं कल्प्यत इति चेन्न अन्यथोपपत्तेर्वक्ष्यमाणत्वात्। तस्माद् वुद्धिपुरुषयोर्मिथः संक्रमणे प्रमाणमपि नास्ति। युक्तिवाधितं चासंगस्यपूर्णस्याकलस्य संक्रमणमिति सांख्यप्रक्रिया नानुभवमार्गागता नापि युक्तिसहेति सिद्धम्।

## ( तार्किकमतखण्डनं )

तथा तार्किकप्रक्रियापि न सम्यगिव। तथाहि।

साक्षात् ज्ञानार्थयोर्योगासंभवाद्व्यवधानतः।
संवंधेऽतिप्रसंगस्य प्रसक्तेरनिवारणात्।

ज्ञानज्ञेययोः संवंधमन्तरेण न ज्ञानादर्थसिद्धिः संभवतीत्यविवादं। तत्र त्वन्मते ज्ञानज्ञेययोः साक्षात्संवंधस्तावन्नास्ति, संयोगादेरसंभवात्, तदभावे च मूलसंवंधाभावे नान्यस्य तत्पूर्वकस्य संवंधांतरस्यानुपपत्तेः। तस्मान्न ज्ञानज्ञेययोः साक्षात्संवंधः। अथ व्यवधानेनैवानयोः संवन्ध इति मतं। तत्र वक्तव्यं। किं करणव्यवधानेन किंवाश्रयव्यवधानेन, नोभयथापि युज्यते ऽतिप्रसंगानिवारणात्। तथाहि। अर्थेन्द्रियमनआत्मनां संयोगो हि ज्ञानज्ञेयसंवंध इष्यते, तत्र देहावच्छिन्नात्मवर्त्तिनाणुपरिमाणेन मनसा स्वैकदेशसंयुक्तेनेन्द्रियेण संयुक्ते विषये चेत् ज्ञानमुत्पाद्यते तदा संयोगपरंपराया अविशेषात् विषयसंयुक्ते तत्संयुक्तेचेत्येवं

सर्वजगद्विषयं ज्ञानमपि कस्मान्नोत्पद्येत; आत्मनस्तस्मिन्नुत्पाद्यमान-ज्ञानस्य च विषयासंबंधेपि तदवभासकत्वस्य सर्वत्र तुल्यत्वात्। अथ करणसंबद्ध एव विषये कार्योत्पत्तिरिति नियमो यथा कुठारसंसृष्टे द्वैधीभाव इति मतं ; एवं तर्हि विषय एव ज्ञानफलमप्युत्पद्येतेत्यात्मनि तन्नस्यात्। तदा मयि घटज्ञानमुत्पन्नमित्याद्यनुभवविरोधः स्यात्। स्यान्मतम् इन्द्रियसंयुक्त एव विषय आत्मनो ज्ञानं नान्यत्रेति नियम इति। तदप्यातिप्रसक्तं, आकाशादेः सर्वात्मनां च तेन संयोगात् तत्रापि ज्ञानप्रसंगात्। यद्युच्येत सावयवेष्वेवेन्द्रियसंयोगात् ज्ञानोत्पत्तिरिति। तन्न, स्वगोलकेष्वपि तत्प्रसंगात् रूपादिषु तदभावप्रसंगाच्च। द्रव्य एवायं नियम इति चेत् उक्तोत्तरमेतद्गोलकेषु प्रसंगादिति। किंच चक्षुरिन्द्रिये प्रसार्यमाणे गजादिविषयवत्तदंतरालवर्त्ति मनुष्यपशुतृण-गुल्मादिनापि तेन संयुक्तत्वाविशेषात् सर्वत्र ज्ञानोदयप्रसंगः। अथोद्दिष्टार्थ एव संयोगो ज्ञानजनक इति मतं, तदपि न, अनुद्दिष्टेपि दुर्गन्धादौ तद्दर्शनात्। अथेन्द्रियावयवैरवगुंठित एव ज्ञानमित्युच्येत, तदेदं वक्तव्यं कोसाविन्द्रियावयवैरवगुंठित इति। यो विषयो ज्ञाने सत्युल्लिख्यते व्यवह्रियते वा स इति चेत्, को ज्ञानेसत्युल्लिख्यते व्यवह्रियते वा, यस्येन्द्रियेणावगुंठनं कृतं स इति चेत्, एवं सति कथं परस्पराश्रयो न भवेत्। ननु कथं परस्पराश्रयो भवेत् यावतार्थावभासस्येंद्रियसंबंधज्ञानापेक्षा नास्ति ज्ञानेनैव केवलमर्थविशेषावभासान्यथानुपपत्यार्थविशेष इन्द्रियसंयोगो नियम्यत इति चेत्। न। ज्ञानस्यार्थविशेषालंबनत्वे हेत्वंतरस्यान्वेषणीयत्वात्। उन्मीलिते नयने वहिःप्रसरतां नेत्ररश्मीनां पुरःस्थितेष्वनेकेषु विषयेषु संयोगस्याविशिष्टत्वाद-

न्यतमविषयपक्षपाते हेत्वंतरस्यावश्यं वक्तव्यत्वात् । अदृष्टमेव हेत्वंतरमिति चेन्न तस्य सामग्रीसंपादकत्वेनान्यथासिद्धेः, अदृष्टकल्पनाया अगतिकगतित्वाच्च ।

किंच संयोगपरंपराया यथोक्ताया ज्ञानोत्पत्तिमात्र एव क्लृप्तत्वादुत्पन्नज्ञानस्य चात्मसमवेततया करणसंवंधाभावान्न करणद्वारापि विषयसंवंधः; उत्पन्नस्यज्ञानस्य विषयेऽतिशयजननसमर्थसम्बन्धपर्यंतं संयोगपरंपराया अवस्थाने प्रमाणाभावाच्च, नच कार्यलिंगकमनुमानं प्रमाणमिति वाच्यं । कार्यस्यान्यथाप्युपपत्तेः, विषयदेशगतज्ञानेनापि विषयावभासोपपत्तेः । तस्मान्न करणव्यवधानेन ज्ञानस्य ज्ञेयसंवंधः । नाप्याश्रयव्यवधानेन । सर्वगतात्माश्रयत्वे ज्ञानस्य युगपत् सर्वावभासप्रसंगात् । देहपरिच्छिन्नात्माश्रयत्वे च देहवाह्यविषयसंवंधाभावात् वाह्यविषयानवभासप्रसंगः। तस्मान्नाश्रयद्वारापि ज्ञानस्य विषयसम्बन्धः। नच तर्हि संवंध एव मास्तु ज्ञानज्ञेययोरिति वाच्यम् । असंवद्धत्वाविशेषात् सर्वावभासप्रसंगात्, मयेदं विदितमिति ज्ञातृज्ञानज्ञेयसंवंधावभासाभावप्रसंगाच्च । तस्मान्न तार्किकमते ज्ञानविषयव्यवस्था ।

( प्राभाकरमतखण्डनं )

प्राभाकराणां यद्यपि ज्ञानं स्वयंप्रकाशं तथापि तस्य देहावच्छिन्नात्मसमवेतत्वाद् वहिर्विषयसंवंधाभावः समान एवेति न तेन विषयावभासाशा कार्या । तथाहि ।

खद्योत इव तज्ज्ञानं स्वयं भासेत केवलं ।
स्वेमाव्याप्तं कथं कर्मकर्त्तारं वावभासयेत् ।

ज्ञानं हि स्वयमन्यानपेक्षतया प्रकाशमानं खद्योतवत् स्वव्यवहारहेतुः स्यात् केवलं कथं तेन विषयात्मानौ ज्ञातत्वव्यवहारास्पदौ संपाद्येयातां तयोस्तेनाव्यापनात् । प्रकाशावगुंठितोह्यर्थो ऽप्रकाशात्मा प्रकाशत इति

ऽव्यवहारास्पदं जायतेऽन्यथाऽपवरकस्थेनापि प्रदीपेन तेन स्वप्रभयानव-गुंठितोपि बहिःस्थितोर्थोवभासेत। त्वन्मते विषयव्याप्तिश्च न ज्ञानस्य संभवति देहावच्छिन्नात्ममात्रसमवेतत्वांगीकारात्, गुणत्वाभिमतस्य च स्वस्याश्रयादन्यत्रातिशयजनकत्वासंभवात्, नहि क्रियाया वा गुणस्य वा स्वाश्रयमतिरिच्य कार्यकरत्वमनुभूयते तथाक्वाप्युदाहरणादर्शनाच्च। तस्मान्न ज्ञानेन बाह्यार्थसिद्धिः। नाप्यात्मनस्तेन सिद्धिस्तस्य ज्ञानाश्रयत्वेपि तेनाव्यापनात्। विषयकर्मकेण ज्ञानेन तावदात्मनः सिद्धिर्दूरापास्त। तस्यैकस्योभयव्याप्तौ प्रमाणाभावात्।

ननु प्रदीपदृष्टांतेनोभयव्याप्तिः संभाव्यते। यथा प्रदीपः स्वाधारं पात्रं तद्ग्राह्यंरूपजातं स्वात्मानं चावभासयति स्वयंप्रकाशमान एव सन् तथा ज्ञानमपि स्वयंप्रकाशमानं स्वाश्रयमात्मानं स्वविषयं घटादिकं स्वस्वरूप चावभासयिष्यतीति चेत्। न, मनोरथमात्रत्वादस्याः कल्पनायाः। नहि केवलं स्वरूपेणस्थित एव प्रदीपस्त्रिषु प्रकाशव्यवहारहेतुः किन्तु स्वकिरणैः सर्वतः प्रसृतैस्तत्तदर्थव्याप्त्या तथैवानुभवात्। न तथा ज्ञानस्य किरणाः संति तस्य निरवयवत्वात्, तेजोवयवाहि किरणाः प्रसिद्धाः। तस्माद्विषमो दृष्टान्तः।

किंच स्वसमवेतज्ञानेन स्वस्य वेद्यत्वेत्वात्मनो वैरूप्यप्रसंग, एकस्यां प्रकाशनक्रियायामेकस्यैवाश्रयत्वविषयत्वाभ्युपगमे कर्त्तुराश्रयस्य क्रियां प्रति गुणत्वं तस्यैव तया क्रियया व्याप्यतया कर्मत्वेन प्रधानत्वं चेति। किंचात्मनि ज्ञानमुत्पद्यमानं तदेकदेश उत्पद्यत किंवा संपूर्णे। आद्ये तस्य परोपाधिमन्तरेण प्रदेशाभावादौपाधिकएवात्मा तेन दृष्टः स्यात्। परावच्छेदस्य चात्मनो निरवयवस्य परमार्थत्वाभावादहमस्मीति

प्रतीतिरात्मविषया भ्रान्तिरेव स्यात् । द्वितीय आत्मनि व्यापकत्वपरिच्छिन्नत्वविप्रतिषत्तिर्वादिनां न स्यात् । तस्मादहंप्रत्ययवेद्योप्यात्मा न भवति । तस्मात् त्रिपुटीप्रत्यक्षवादे तार्किकमते च न ज्ञानस्य विषयव्यवस्थासिद्धिरिति ।

## ( भाट्टमतखण्डनं )

भाट्टानामपि मते विषयेन्द्रियसंयोगादात्मनो विषयावभासकज्ञानाकारपरिणामो य इष्यते स किं देहावच्छिन्नस्यात्मनः परिणामः किंवा सर्वगतस्य। आद्ये स परिणामो देहांतरेव चेद्वर्त्तेत तदा तस्य वहिर्विषयव्याप्त्यभावात् तेन विषयस्फुरणं न स्यात् । यदि वहिर्विषयं व्याप्नुयात्तदा तस्य सर्वात्मना वहिर्गमन आत्मनो जानामीति स्वाश्रयतया ज्ञानानुसंधानाभावप्रसंगः । एकदेशेन गमने सावयवत्वमात्मपरिणामस्य स्यात् तथाचात्मधर्मत्वानुपपत्तिः । नहि निरवयवस्य महतः सावयवो धर्मो भवतीति क्वचिद्दृष्टमस्ति। तस्मान्न परिच्छिन्नात्मपरिणामपक्षः साधुः । नापि द्वितीयः सर्वगतात्मनः परिणामे सर्वावभासप्रसंगात् । वस्तुतस्त्वात्मनः परिणाम एव न संभवति, परिणामिनोऽनित्यत्वनियमा ( नित्यस्य क्रमाक्रमाभ्यामर्थक्रियाविरोधा ) दात्मनोप्यनित्यत्वप्रसंगात् । अपि चैकस्यैवात्मनो ज्ञानाज्ञानरूपता न युक्ता जडाजडयोरेकत्वांशांशित्वयोरनुपपत्तेः । तस्मात् द्रव्यबोधात्मक आत्मेत्ययं पक्षएवानुपपन्न इति ।

## ( चार्वाकमतखण्डनं )

ये पुनर्गोलकातिरिक्तमिन्द्रियमेव नास्तीति मन्यन्ते तेषामन्धवधिरदर्शनादसमंजसः पक्षः । न च तत्र गोलकवैकल्यं कल्पनास्पदं

वधिरावधिरयोः कर्णमण्डले विशेषादर्शनात् । नेत्रासंवद्धस्य च नक्षत्रादेर्द्दर्शनाभावप्रसंगो गोलकस्येंद्रियत्वे प्रसज्ज्येत तस्य तत्संवंधाभावादसंवद्धग्रहणेचातिप्रसंगस्योक्तत्वात् । चक्षुषो विषयसम्वन्धाभ्युपगमेऽग्निदर्शने नेत्रदाहप्रसंग इति चेत्, न, गोलकातिरिक्तस्य चक्षुषस्तैजसत्वांगीकारात् तेजसश्च तेजसा दाहानुपपत्तेः । नच काचाभ्रपटलजलांतरितानां नेत्रणासंवद्धानामपि दर्शनात् नेत्रस्यासंवद्धार्थग्राहकतेति वाच्यं। काचादीनामतिस्वच्छद्रव्यतया नेत्रप्रसारनिरोधकत्वाभावात्। नहि भित्तौ मुखप्रतिविम्वं न दृश्यत इति दर्पणेपि तददर्शनं कल्प्येत दृष्टविरोधापत्तेः। तथाच द्रव्यस्वभावानुसारित्वेन यथानुभवमेव सर्वत्र व्यवस्थोपपत्तेः संतीन्द्रियाणि गोलकारिक्तानीत्यभ्युपेयम्, अन्यथा ऽसंवद्धार्थग्रहेतिप्रसंगदोषस्य परिहर्त्तुमशक्यत्वात् । तज्जन्यज्ञानं भूतसंघातजन्यमिति यदुक्तं तच्चैतन्यस्य भौतिकत्वनिराकरणेन निराकृतं भवति । ×

---

× यदुक्तं भूतसंघात एव चेतनावानात्मेत्यादि तदयुक्तम्। अचेतनेभ्यश्चेतनोत्पत्यनुपपत्तेः । नच क्रमुकादिभक्षणन्यायोत्र युक्तो ऽसंगतिपन्नत्वात् । तेष्वेकैकस्मिन् विद्यमानमेव मदहेतुत्वं तदेकतापत्तेः प्रागनभिव्यक्तं सत् पश्चादभिव्यज्यते; यथा जिह्वायामतिपित्तोद्रेकात् शुष्कायां विद्यमानोपि शर्करादिरसो नाभिव्यज्यते तस्यां पुनः सरसायामभिव्यज्यते तद्वत्, अन्यथा सिकतार्कपत्रमृच्चूर्णानां सहभक्षणेपि मदोत्पादप्रसंगात् । तस्मान्नेदमिहोदाहरणं । अथ देहस्वभावएव चैतन्यामित्युच्येत तदा जीवन्मृतत्वभेदानुपलंभप्रसंगः । नहि भावेसति स्वभावो ऽपगच्छति । तस्मान्न देहस्वभावश्चैतन्यं । किंच पतितेपि शय्यायां देहे स्वप्ने देशान्तरगमनादिदर्शनादस्मात्स्थूलदेहादन्य आत्मेति निश्चीयते । तथाच स्वप्नजाग्रद्देहयोः परिग्रहपरित्यागाभ्यां व्यवहरन् गृहाद्गृहान्तरं संचरन्निव देवदत्तो गृहाभ्यां देहाभ्यां भिन्न एवात्मेत्यनुभवमेवावलंब्यांगीकर्त्तव्यम्। एवमेकस्मिन्नपि

तस्मान्न लोकायतमतेपि व्यवस्था । चैतन्यस्य देहधर्मत्वे देहाद्बहिस्तस्याप्रसरात् बाह्यविषयग्रहणाभावप्रसंगस्यापरिहाराच्चेति ।

(बौद्धमतखण्डनं)

यदालयविज्ञानं प्रवृत्तिविज्ञानमिति च प्रत्ययचतुष्टयमिति च बौद्धैः कल्प्यते तत्तेषां स्वमतविरोधि दृश्यते । तथाहि । अहमिति प्रत्ययोह्यालयविज्ञानं विवक्षितं तत्रेदमभिधीयतामहमिति प्रत्ययमात्रमात्मा तत्संतानोवेति । आद्ये तस्य स्वरसभंगुरतयाहमिदं जानामीति ज्ञातृज्ञेयज्ञानानां कर्तृकर्मक्रियाणामनुसंधानाभावप्रसंगः प्रवृत्तिविज्ञानालयविज्ञानयोः परस्परवार्त्तानभिज्ञत्वात् । नचाहमिदं जानामीति च ज्ञानत्रयमेतन्नत्वेकं त्रयग्राहकमिति वाच्यं । तथा सति परस्परवार्त्तानभिज्ञत्वादात्मनो विषयासिद्धौ सर्वव्यवहारलोपप्रसंगात् । अथ क्रमेण ज्ञानत्रयस्योत्पत्तौ तत्संकलनात्मकं चतुर्थमिदं जायत इति मतं । तदसत्, तस्यापि पूर्वसमानयोगक्षेमत्वात् तद्ग्राहकत्वानुपपत्तेः, अन्यथा पूर्वेषां त्रयाणामस्यच समानकालत्वापत्तौ क्षणिकवादहानात्, तदभावे च ग्राह्यग्राहकभावातिप्रसंगात् । तस्मादालयविज्ञानमात्रस्य न प्रवृत्तिविज्ञानत-

देहे बाल्यकौमारयौवनवार्द्धक्येषु विपरिणममानेप्यविपरिणममान एकरूपोहंकारो देहव्यतिरिक्तमात्मानं गमयति । योहं बाल्ये पितरावन्वभूवं सोहमद्य नप्तॄननुभवामीति प्रत्यभिज्ञाया देहान्यविषयत्वात् । ननु फलस्य विपरिणामेपि तदेवेदं फलमिति प्रत्यभिज्ञावत् देहेपि विपरिणममाने कथं सा न स्यादिति चेत् । न, परिणामद्रष्टुः परिणममानादन्यत्वात् । नहि परिणममानं फलमेव स्वावस्थां जानाति किन्तु तदन्यस्तस्य सर्वास्ववस्थास्वनुभवितृतयानुगतस्तथेहापि परिणममाने देहे तस्य सर्वावस्थासाक्षितयानुगतः स्वयमविक्रियमाण एव प्रत्यभिज्ञातेति युक्तम् ।

द्विषयसंबंध इत्यायातमांध्यमशेषस्य लोकस्य । नन्वस्तु द्वितीयकल्पः आलयविज्ञानसंतानस्यात्मत्वे तस्य स्थिरत्वात् पूर्वोक्तदोषाप्राप्तेरिति चेत्, न, संतानिव्यतिरिक्तस्य संतानस्यानिरूपणात् । नहि क्रमेणगच्छत् पिपीलिकाव्यक्तिव्यतिरेकेण तासां पंक्तिर्नामास्ति, ज्वालाजलप्रवाहादि-ष्वपि नैरंतर्येण गम्यमानव्यक्तिव्यतिरेकेण संतानो नामोपलभ्यते । नहि मणिषु सूत्रवत् क्रमवद्विज्ञानेषु संतानोन्यः केनचिदुपलब्धोस्ति । तस्मान्न संतानो वस्तुभूतो दूरे तस्यात्मत्वं स्थिरत्वं वा । भवतु वा यः कोपि संतानस्तेनापि न विषयो ग्रहीतुं शक्यते तस्याप्यंतरेव विपरिव-र्त्तमानस्य वहिर्विषयसंवंधासभवात् तदसंवंधेच तद्ग्रहणासंभव उक्तः । तस्मान्नालयविज्ञानं तत्संतानो वात्मेति स्थितं । अपिच संतानिनां संतानः स्वयंप्रकाशः परप्रकाश्यो वा । नाद्यः तस्य संतानिभ्यो विज्ञा-नेभ्यो भिन्नत्वे घटवदन्यवेद्यत्वापत्तेः तदभिन्नत्वे क्षणिकत्वात् संतान-त्वानुपपत्तेः । न द्वितीयः । तत्प्रकाशकस्य क्षणिकत्वे द्वित्रिव्यक्तिग्रा-हकत्वाभावात् संतानप्रकाशकत्वायोगात् । नह्येकक्षणे संतानः कस्या-प्यवभासते । अक्षणिकस्य संतानग्राहकत्वांगीकारे तस्यैवात्मत्वात् संतानात्मवादहानिः, तस्याप्यन्यवेद्यत्वे ऽनवस्थाप्रसंगः, स्वप्रकाशत्वे वेदांतिमतप्रवेशः । अभ्युपगम्यते हि वेदान्तिना क्रमभाव्यनेकविषय-विज्ञानानामुत्पत्तिविनाशसाक्षी चैतन्यैकस्वभावो नित्यो निर्विकार इति। यदपि प्रवृत्तिविज्ञानं नामेन्द्रियादिजन्यमभ्युपगम्यते तत् किमालय-विज्ञानव्यक्तिविशेषः किंवा तज्जन्यं ज्ञानान्तरं । नाद्यः तस्य विषय-संवंधासंभवस्य प्रागुक्तेः प्रवृत्तिविज्ञानत्वायोगात् । द्वितीये तस्यांतरेव जनने विषयासंवंधतादवस्थ्यात् तेन विषयासिद्धिप्रसंगः । वहिर्जनने

च तेनात्मनः संवंधाभावादात्मनस्तद्द्वारकविषयव्यवहाराभावः। अपिच येन प्रत्ययचतुष्टयेन विषयविज्ञानं जायते तद्युगपदुत्पद्यते क्रमेण वा। नाद्यः तद्यौगपद्ये प्रमाणाभावात्। नहि समनंतरप्रत्ययसमये ऽधिपत्यादयः प्रत्ययाः संभवंति। यदा कदाचिदालयविज्ञानसंताने यत्पटज्ञानमुत्पन्नं तत् खलु सांप्रतपटज्ञानजनकः समनंतरप्रत्ययो बौद्धैरभिधीयते तस्य चिरविनष्टादाधिपत्याद्यवसरे ऽभावात्। यदि समनंतरप्रत्ययशब्देनेदानींतनपटज्ञानात्पूर्वज्ञानमभिधीयेत तदा पूर्वं कुम्भज्ञानस्यापि कदाचिज्ज्ञातत्वोपपत्तेः तेनापि पटज्ञानोत्पत्तिप्रसंगः। नचैतदिष्टं विजातीययोर्ज्ञानयोः कार्यकारणत्वायोगात्। तथाधिपतिसहकार्यालंवनप्रत्ययानामपि चक्षुरालोकरूपात्मकानां भिन्नसहकारिकिभिन्नसामग्रीजन्यत्वान्न युगपज्जन्म संभाव्यते। न द्वितीयः। प्रत्ययचतुष्टयायौगपद्ये सहकारिसंनिधिक्षणस्यैकस्याभावे ततः प्रवृत्तिविज्ञानस्य कार्यस्यानुत्पत्तिप्रसंगात्। तस्मात् बौद्धप्रक्रियाप्यसंगतैव। एवमार्हतादिकल्पना अप्यसंगता ऊहनीया + एवमनुभवयुक्तिविरुद्धा वादिनां विषयग्रहणप्रक्रिया उपेक्ष्या एव। अनुभवाविरुद्धा दृढतरयुक्त्युपवृंहिता वेदांतप्रक्रियैवोपादेयेति सा प्रक्रम्यते।

---

+ आत्मनो देहपरिमाणत्वे बाह्यवस्तुज्ञानासम्भवात्, घटवदनित्यत्वप्रसंगाच्च, सर्वस्यानैकान्तिकत्वे अनैकान्तिकत्वस्यापि तथात्वापत्तेः।

एवं जीवस्य यदणुपरिमाणतावसीयते तत्रापि शरीरव्यापकत्वाभावात् सर्वांगवेदनाननुसंधानप्रसंगोदोषः प्रादुष्यात्। अणोरप्यात्मनो ज्ञानं शरीरं व्याप्नोतीति चेत्। तत्किमात्मनः स्वरूपं गुणो वा मणिदीपादेरिव प्रभा वा स्यात्। नाद्यः स्वरूपस्याणुमात्रत्वाभ्युपगमात्तावन्मात्रस्य ज्ञानस्य व्याप्त्यसंभवात्। न द्वितीयो गुणस्य द्रव्याद्वहिर्वृत्तेः। गन्धस्यापि पक्षतुल्यत्वेन दृष्टान्तत्वासंभवात्। न तृतीयः प्रभाया विरलावयवद्रव्यत्वान्निरवयवस्यात्मनः प्रभाऽसंभवात्।

## ( सिद्धान्तपक्षप्रतिपादनम् )

ज्ञानस्यात्मस्वरूपत्वं युक्त्या साधितं साध्यते च । ( क्रोडपत्रे द्रष्टव्यः ) । तेनैव स्वप्रकाशत्वकूटस्थत्वे च सिद्ध्यतः । यदा ज्ञानात्मनोरभेदः सिद्धस्तदा तस्य ज्ञानस्य स्वप्रकाशत्वं कूटस्थत्वं च सिद्धमेव भवति । नन्वात्मन एव कथं स्वप्रकाशत्वं कूटस्थत्वं चेति । उच्यते । अस्ति हि ममेदमनुकूलप्रतिकूलमिति धीः प्रतीयमानवस्तुविषया । सा च विशिष्टज्ञानत्वाद्विशेषणस्फुरणमपेक्षते विशेषणंचात्मेति तस्य प्रथमत एव स्फुरणमंगीकार्यम् । न चेतःप्रथमं तद्विषयज्ञानमुत्पन्नमिति प्रमाणमस्ति सुषुप्तेरुत्थानसमय एव भासमाने वस्तुन्यनुकुलत्वादिज्ञानोदयदर्शनात् । नचाहंममेदमनुकूलमिति विशिष्टं ज्ञानमुत्पद्यमानमुपलभ्यते तस्मादकस्माद्विशिष्टज्ञानोत्पत्तिदर्शनात्तस्य च विशेषणस्फुरणसापेक्षत्वादिह विशेषणीभूतात्मस्फुरणं स्वत एव सिद्धमित्यभ्युपेयं । किंच सुषुप्तौ सर्वेन्द्रियमनसां सविषयाणामुपरमस्य प्रसिद्धत्वात् तद्व्यापारजन्य ज्ञानाभावेप्यात्मस्फुरणस्य तत्रावश्यमंगीकार्यत्वादन्यथोत्थानानंतरमेतावन्तं कालमहमस्वाप्समित्यादिना सुषुप्तिपरामर्शायोगात् सिद्धमात्मनः स्वत एव स्फुरणं । अपिच यत् स्वान्यमानाधीनागंतुकप्रकाशं तत् स्वसत्तायां कदाचिदज्ञानसंशयविपर्ययावभासयोग्यमवगतं । तथाचात्मापि यदि स्वान्यमानाधीनागंतुकप्रकाशः स्यात् तदा तस्मिन्नप्यज्ञानादि कदाचिदुल्लिख्येत, नचोल्लिख्यते । ननु मामहं न जानामीत्यज्ञानमात्मविषयमनुभूयत इति चेत् , न, मामहमित्यात्मानमुल्लिखतस्तस्मिन्नज्ञानानुभवानुपपत्तेः । तर्हि किं विषयोयमनुभव इति स्वभावतः परिस्फुरत एवात्मनस्तत्त्वाविषयोयमिति ब्रूमः । अपिच प्रसाद्य

प्रमित्सा प्रमेयविषया न स्वविषया नापि प्रमातृविषया, अन्यथा ऽनवस्थापातादात्माश्रयापत्तेर्वा । यदि प्रमित्सा प्रमाता वा प्रमित्स्येत तदा प्रमित्सांतरेण प्रमात्रन्तरेण वा तत्प्रमित्सायां तत्रापि तदन्यप्रमित्साप्रसरादनवस्था । स्वयमेव प्रमित्साप्रमात्रोः प्रमित्सायां स्यादात्माश्रय इति ।

किंच विषयव्यवसायसमये प्रमातृप्रमिती यदि न स्फुरेतां तदा विदितोयं मयेति समनंतरमनुव्यवसायो न स्यात् तदानीं तद्विषयज्ञानांतरानुदयात् सिद्धा तयोः स्वयंप्रकाशता, अन्यथानवस्थाया दुष्परिहरत्वात् । अथ स्वयमनवभासमानमेव ज्ञानं चक्षुरादिवत् स्वविषयमवभासयिष्यति पश्चाच्चानुव्यवसायेन विषयीक्रियत इति मतं । तदयुक्तं । चक्षुरादिवदर्थप्रकाशजनकत्वापत्तौ तस्यापि पूर्वसमत्वात् स्वविषयप्रकाशान्तरजनकतेति पुरतः पुरतोनवस्था स्यात् । अथ ज्ञानानि ज्ञानांतरेणावभास्यमानान्येव स्वंस्वंविषयमवभासयन्तीत्युच्येत तदा तस्यापि समानन्यायविषयत्वात् पृष्ठतःपृष्ठतोनवस्थाप्रसंगः । अपिच येनात्ममनःसंयोगेन व्यवसायज्ञानमुत्पद्यते तेनैवानुव्यवसायज्ञानमपि संयोगान्तरेण वा । नाद्यः, असमवायिकारणक्रममंतरेण कार्यक्रमायोगात् । अथ सामग्रीभेद एव कार्यभेदहेतुर्नासमवायिकारणभेद इति मतं । तन्न । अनुव्यवसायोत्पत्तिसमये व्यवसायस्यसामग्रीभेदकस्यानवस्थानात् तद्ग्रहानुपपत्तेः । अदृष्टान्यैकजातीयविशेषगुणद्वयस्यैकास्मिन्द्रव्यदेशे युगपत् समवायायोगात् । किंचास्मिन्पक्षे एकस्मिन्नात्ममनःसंयोगे सहकारिभेदसमवधानमात्रेण चेदनेककार्योत्पादस्तदा व्यवसायानुभवोत्पत्तिसमये कदाचित् केनचिन्निमित्तेनानेकविधपूर्वानुभूतार्थज्ञानसंस्कारस्योद्बोधे तत्तदर्थविषया स्मृतयोप्युत्पद्येरन् । अतो ऽतिप्रसंगान्नायं पक्षः साधुः । अपिच

आत्मसमवेता धर्माश्चेदात्मगतेन ज्ञानेन गृह्येरन् तदात्मपरिमाणस्यापि तेन ग्रहणप्रसंगः, संयुक्तसमवायरूपस्य सन्निकर्षस्योभयत्राविशेषात् । नचात्मपरिमाणं गुरुत्वादिवदयोग्यत्वादग्राह्यमिति वाच्यं । प्रत्यक्षगत परिमाणस्य प्रत्यक्षयोग्यत्वात् । किंचायोग्यत्वं तस्य परिमाणत्वाद्वा विभुपरिमाणत्वाद्वा ऽत्मपरिमाणत्वाद्वा । नाद्यो, घटादिपरिमाणेषु व्यभिचारात् । न द्वितीयो, ऽप्रत्यक्षाश्रितत्वोपाधिहतत्वात्, यतो यत्र परिमाणत्वे सति प्रत्यक्षायोग्यत्वं तत्राप्रत्यक्षाश्रितत्वमिति नियमो, यत्र विभुपरिमाणत्वं तत्राप्रत्यक्षाश्रितत्वमिति तु न नियमः, प्रत्यक्षात्मगतपरिमाणे व्यभिचारात्। न तृतीयो, दृष्टान्ताभावेनानुपसंहारित्वात्। न चेदं केवलव्यतिरेकीति वाच्यं। विमतं प्रत्यक्षयोग्यं प्रत्यक्षाश्रितपरिमाणत्वात् घटादिगतपरिमाणवदिति प्रतिपक्षबाधितत्वात् । न चाविभुद्रव्यगतत्वमत्रोपाधिरिति युक्तं उपाध्यभावसाध्याभावयोर्व्याप्तौ प्रत्यक्षायोग्यगतत्वोपाधेः संभवात् । आकाशादिपरिमाणं हि प्रत्यक्षायोग्यगतं, नचात्मपरिमाणं तथाभिमतमिति । अपिचात्मपरिमाणं चेत् प्रत्यक्षेण न गृह्येत तर्ह्यात्मापि प्रत्यक्षेण न गृह्येत, प्रत्यक्षायोग्यपरिमाणस्यद्रव्यस्याप्रत्यक्षत्वानियमात् । नच समुद्रादौ व्यभिचारः, तत्परिमाणस्यापि यावदिन्द्रियसन्निकर्षं प्रत्यक्षत्वात्, अन्यथा समुद्रान्तर्गतगतिमात्रे नौश्चलति ततः परस्तान्न किंचिद्दृश्यत इत्यादि व्यवहाराभावप्रसंगात्। नचात्मन्यपि यावदिन्द्रियसंनिकर्षं परिमाणग्रहोस्तीति वाच्यम्। इन्द्रियस्य मनसोणुमात्रदेशे सन्निकर्षादणुरेवात्मा भासेत, न वा सोपि भासेत अणोरप्रत्यक्षत्वात्। नन्वहं मनुष्य इत्यादौ देहपरिच्छिन्न आत्मानुभूयत इति चेत्; न, प्राणादिमद्देहमात्रस्यैवास्मिन्ननुभवे स्फुरणादन्यथा

लोकायतिकैर्विवादो न स्यात्। तस्मादात्मगतो धर्म आत्मा वा नात्मना ग्रहीतुं शक्यत इति नानुव्यवसायेन व्यवसायग्रह इति स्थितं। यः पुनः संयोगान्तरेण इति द्वितीयः पक्षस्तत्र क्रियादिसंयोगान्तानेकक्षणव्यवधानेन जायमानानुव्यवसायसमये व्यवसायस्य नष्टत्वादेव न प्रत्यक्षविषयतेति स्पष्ट एव दोष इत्यास्तां विस्तरः।

तस्माज्ज्ञानं स्वप्रकाशं तच्चात्मरूपमित्यात्मापि स्वप्रकाशः। यद्वात्मा स्वयंप्रकाशः स एव ज्ञानरूप इति ज्ञानमपि स्वयंप्रकाशमेवेति सर्वमनवद्यं। कूटस्थत्वमप्यस्यात्मनः सिद्धम्। आत्मनो हि विकारो ज्ञातृत्वकर्तृत्वभोक्तृत्वलक्षणः सोस्य स्वतो न भवति किन्तु परोपाध्यध्यासनिबन्धन एवेति पूर्वमेव प्रतिपादितम्।

इदानीं तस्येन्द्रियैर्विषयग्रहणप्रक्रियाप्रदर्शनेन जाग्रदवस्थानिरूपणं प्रक्रम्यते तस्य स्वतोऽविकारिकूटस्थताप्रकटनाय। तथाहि। स्वप्रकाशसद्रूपस्य चिदात्मनः सदा यथावत् स्वगतविशेषणावभासयोग्यस्याप्यनवभासोऽनाद्यविद्यापटावृतत्वादिति प्रतिष्ठापितं। तस्यच विशेषतोभिव्यक्तिरंतःकरणवृत्तेरन्यत्र न दृष्टचरी; सुषुप्तावंतःकरणविलये चिदात्मनः प्रकाशमानस्यापि विशेषतः स्फुरणादर्शनात्, अवस्थान्तरे चांतःकरणे व्याप्रियमाणे तद्दर्शनात्। तथाच येन येन विषयाकारेणान्तर्वा वहिर्वान्तःकरणं विपरिवर्त्तते तेनतेनात्मना चिदात्मापि विशेषवानिवाभिव्यज्यते, यथौष्ण्यप्रकाशमात्रस्वरूपस्याग्नेः स्वत आकारविशेषरहितस्य स्वाभिव्यञ्जककाष्ठायःपिण्डादिगतेनाकारविशेषेण वक्रवर्त्तुलत्रिकोणकृशस्थूलत्वाद्याकारविशेषावभास स्तद्वदिति वेदान्तसिद्धान्तः; तमनुसृत्य सर्वत्रानुभवाविरोधेन विषयग्रहणव्यवस्थास्माभिरिह क्रियमाणावधार्यताम्।

## ( विषयानुभवव्यवस्था )

श्रोत्रादीन्द्रियं यदा शब्दादिभिर्विषयैः संवध्यते तदा तेन तेनेन्द्रियद्वारेणान्तःकरणं तं तं विषयं प्रति धावति दूरे वा ऽन्तिके वा। यो विषयो यादृगाकारो येनेन्द्रियेण संवध्यते मनोपि तं विषयमभिव्याप्य तादृगाकारं भवति यथा क्षेत्रविशेषं कुल्याद्वारेण प्राप्य क्षेत्रसमाकारमेवोदकं भवति तद्वत् । एवमवस्थेन्तःकरणे चिदात्माप्यभिव्यज्यमानस्तादृगवस्थ एवाभिव्यज्यते कुल्योदक इव सावितृप्रकाशः । स चैकोपि स्वाभिव्यञ्जकोपाध्यवस्थाभेदेन तदुपहिततया भिद्यते न स्वतः । तत्र देहमध्यगतांतःकरणभागेभिव्यज्यमानश्चिदात्मा वृत्तिमदंतःकरणोपाध्यभेदेन प्रमातेति व्यपदेशभाग् भवति । विषयमभिव्याप्य तदाकाराकारित वृत्त्युपाध्यभेदेन प्रमाणपदवाच्यो भवति । स एव वृत्तिव्याप्तविषयाभेदेन प्रमेयशब्दाभिधेयो भवति । विषयावच्छेदेन स्फुरणापेक्षया स एव प्रमितिः फलमिति चोच्यते । ×

---

× अस्ति संविन्नाम प्रमाणफलं यद्विषयस्फुरणमिति प्रसिद्धम । तस्य स्वयंप्रकाशत्वं नित्यत्वं चांगीकारणीयं, तस्य जडत्वे तत्संसर्गाद्विषयस्य स्फुरणासिद्धेः। न हि जडेन जडं प्रकाश्यते तथासति विषयस्य स्वत एव प्रकाशापत्तेः प्रमाणवैयर्थ्यापातात् । अजडप्रकाशस्य चाप्रकाशमानस्यान्यस्फोरकत्वे तज्जन्याऽन्या विषयस्फूर्तिः स्यात्सा ऽप्यप्रकाशमाना चेत्तस्या अन्येत्यनवस्था प्रसज्येत। प्रकाशमानत्वं चान्याधीनप्रकाशत्वे ऽन्यस्याप्येतत्समानयोगक्षेमत्वात्तत्प्रकाशायाप्यन्यापेक्षेति तत्राप्यनवस्था दुर्वारा । तस्मात्स्वप्रकाशैव प्रमाणफलात्मिका संविदिति । तथा तस्या अनित्यत्वे च न करणविषयोपादानता संगच्छते तयोर्जडयोरजडफलोपादानत्वासंभवात् । नापि प्रमातोपादानं तस्यापि चैतन्यगुणोत्पत्तेः

यस्मिन्नेते भेदाः परोपाधिभेदकृताः स निर्विकारो निर्विशेषः कूटस्थ-चिद्धातुः साक्ष्यावभासकतया साक्षीति व्यपदिश्यते । तथाच प्रमातृ-प्रमाणप्रमेयावस्थांतःकरणावभासकतया ऽवभासमानस्य चिदात्मनः साक्षाद्विषयप्रमाणप्रमातृसंबंधान्मयेदं विदितमिति वा, इदमहंजानामीति वा कर्तृकर्मक्रियासंबंधावभास उपपद्यते नान्यथा; प्रमात्रादीनां परिच्छिन्नत्वादन्योन्यवार्त्ता ऽनभिज्ञत्वात् । तत्तद्विषयज्ञानांतरोत्पत्त्या तदवभासाभ्युपगमे ऽनवस्था दुरवस्था स्यात् । तस्मात् त्रितयानुस्यूतः स्वतःसिद्धप्रकाशः साक्ष्यंगीकर्त्तव्यः । एवंस्थिते चैतन्यस्य नित्यात्मस्वरूपत्वेप्यन्तःकरणैक्याध्यासात्तस्य च विकारित्वाद्विषयानुभवाद्यात्मनान्तःकरणवृत्त्युत्पत्त्यादिभिरुत्पत्तिविनाश संस्काराः स्मृतिश्चेत्येवमवस्था व्यवहारयोग्या भवन्ति । अन्तःकरण-वृत्तीनां च वहिरिन्द्रियपराधीनत्वाद्यावदिन्द्रियसन्निकर्षमेव गमनं नान्य-त्रेति व्यवस्था चोपपन्ना भवति । ननु घटं प्रत्युन्मीलिते नयने नयन-घटयोरंतरालवर्त्ति तृणादिसर्वमेव कस्मान्न प्रतिभासते तेषामपि चक्षु-सन्निकृष्टत्वाविशेषादिति चेत् । भासत एवेति वदामः । तत्रेन्द्रियस-न्निकर्षमात्रं न भानहेतुरपित्विन्द्रियसन्निकृष्टार्थाकारेण मनःपरिणामः । स चादृष्टाद्युद्बुद्धसंस्काराधीनो, ऽन्यथा मनसो व्यासंगेपीन्द्रियसंवद्धार्थो भासेत । अनुभवश्चैवमेवोपपद्यते । प्रमातृसंवद्धं हि प्रमेयमवभासते

प्राग्जडत्वाविशेषात् । चिद्रूपत्वे तु तस्य सावित्रालोकवत्साधारण्येन स्फुरतः सर्व-त्रानभिव्यक्तविशेषस्य दर्पणादाविव सावित्रालोकस्य विषयविशेषस्य दर्पणादाविव सावित्रालोकस्य विषयविशेषसंसृष्टतदाकारावस्थान्तःकरणवृत्तिप्रतिफलितत्वेन लब्धविशेषतामात्रेण प्रमाणफलत्वव्यपदेशोपपत्तेर्न मुख्यौ जन्मविनाशौ वृत्तिना-शादेव विनाशव्यवहारसंभवादिति नित्या स्वयंप्रकाशरूपा च प्रमितिः प्रमाणफलम् ।

नासंबद्धमतिप्रसंगात् । प्रमातृता चान्तःकरणसंबंधनिबंधना । संबंधश्च तादात्म्याध्यासमंतरेण नान्य उपपद्यते। तथाच विषयदेशे घटः स्फुरतीति प्रमाणफलावभासेपि प्रमातर्यैव तदवभास इत्यनुभवो न विरुद्ध्यते, प्रमातर्यैव प्रमेयस्याप्यन्तःकरणवृत्त्यावगुंठनात् प्रमातृव्यापारत्वाद्वृत्तेरिति सुस्थिता प्रत्यक्षेण विषयग्रहणव्यवस्था ।

अनुमानेनापि विषयग्रहणप्रक्रियोच्यते । यथोक्तया प्रक्रियया प्रत्यक्षेण व्याप्यव्यापकतया संबद्धयोर्द्वयोरर्थयोः क्वचिद्भूयोदर्शनेनावधारणायां जातायां यदा पुन र्यत्रकुत्रापि व्याप्यत्वेनावधारितोर्थो दृश्यते तदा तद्दर्शनेन पूर्वगृहीतसंबंधज्ञानजनित संस्कारोद्बोधे सति तत्सहकृत व्याप्यज्ञानाद् व्याप्याधारनिष्ठे व्यापकत्वाभिमते बुद्धिरुत्पद्यते, सा तूत्पद्यमाना न विषयदेश उत्पद्यते किन्वन्तरेव प्रमातरि वह्न्याद्याकारा जायते, साक्षादन्तःकरणस्य वह्न्यादिविषये संबंधाभावादिन्द्रियद्वारा हि विषयसंबंधो मनस, इन्द्रियं च न व्यवहितेर्थे संनिविशतीति । अतः स विषयः परोक्ष इति व्यवह्रियते । एवमेव ज्ञायमानकरणजन्येषूपमित्यादिषु परोक्षार्थविषयेषु ज्ञानेषु प्रक्रिया योज्या ।

अभावः प्रत्यक्षेण गृह्यत इति तार्किकाः, अनुपलब्धिमात्रेण गृह्यत इति मीमांसकाः। अस्माकं तु तत्रानादरो यापिकाप्यस्तु तत्र प्रक्रियेति। असतः प्रमेयत्वानंगीकारादज्ञातं हि वस्तु प्रमेयमिष्यते । अज्ञानं च चिदात्माश्रयविषयम् । चिदात्मा च सन्निति स एव सर्वत्र नत्वसन् वंध्यापुत्रादि । तथाच यथा चिदात्मैवानिर्वचनीयेन घटादिरूपेण घटोस्तीत्येवमात्मना गृह्यत एवं स एव घटसंस्थानविरुद्धाकारेण घटो नास्तीति वा घटाभावोस्तीति वोल्लिख्यते, यदिहास्ति तन्नघटः किन्तु

तद्विरुद्धाकारं किमपीति। अतः सदात्मैव सर्वत्रानाद्यविद्याविक्षिप्तभूत-भौतिकसंस्थानविशेषानुगततया तत्तदर्थसत्तात्मना ऽवभासते तदभा-वात्मना च।

यत्र यदाकारा प्रमाणवृत्तिरुदेति तस्मिंस्तदाकारसन्मात्रचिदात्मगत-मावरणमज्ञानात्मकमभिभूयत इति स्थितिः। तत्रायं विशेषो यत्र साक्षादिन्द्रियसंबंधः तत्र मनसोपि साक्षात्संबंध इति तद्द्वारा प्रमातुः साक्षाद्विषयसंबंधाद्विषयसंबद्धे प्रमातरि स्फुरणोदयादिन्द्रियग्राह्यं फल-व्याप्यमिति गीयते; तत्र प्रमात्रव्यवधानेन साक्षाद्विषयावरणाभिभवात्। यत्र पुनर्न साक्षादिन्द्रियसंबंधस्तत्रान्तःकरणव्याप्त्यभावात् प्रमातुः साक्षात्संबंधाभावाद्विषयदेशे विषयावच्छिन्नात्मनि न स्फूर्तिरुदेति किंतु ग्राह्यविषयाव्यभिचरितलिंगादिज्ञानवलात् तत्तदर्थाकारा मनोवृत्तिरन्तरे-वोदेति, सा चोत्पद्यमाना स्वविषयगताज्ञाततां वाधमानापि न सम्यग् वाधते किन्तु सुषुप्तिव्यावृत्तिमात्रं तत्रापादयति तदा विषयसद्भाव-भानेपि तद्गतरूपाकारसंख्यादिवैशिष्ट्यस्यानवभासात्। अतः परोक्षार्थो वृत्तिव्याप्य इत्युच्यते। एवं वाह्यविषयग्रहणप्रक्रिया।

आन्तराः पुनरज्ञानांतःकरणतद्धर्मरागसुखदुःखादयो न फलव्याप्या नापि वृत्तिव्याप्या किन्तु केवलसाक्षिवेद्या इत्युच्यन्ते। साक्षिणस्तेषां च व्यवधानाभावात् तत्रान्तःकरणवृत्तितद्व्याप्तलिंगादेरनपेक्षणात्। चिदात्मा तु वाक्यजन्यवृत्तिव्याप्योपि स्वप्रकाश एवेति न तस्य विषयत्वापात्तिः। तदुक्तं "अक्षजन्यं फलव्याप्यं वृत्तिव्याप्यमतीन्द्रियं। साक्षिवेद्यमविद्यादि वृत्तिव्याप्यापि चित्स्वभेति।" चिदात्मन्यज्ञाननिवृत्ति-मात्रस्य वाक्यजन्यवृत्तिकृत्यत्वात् तदवभासस्य स्वतःसिद्धेः वृत्त्या

तत्र फलानाधानान्न तस्य फलव्याप्यत्वलक्षणविषयभावः । तदप्युक्तं " फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितं । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षितेति ।"

तदेवमात्मनो विषयानुभवव्यवस्थोपपादिता ।

## ( स्मृत्युत्पत्तितद्विषयव्यवस्था )

इदानीं स्मृत्युत्पत्तितद्विषयव्यवस्थोपपाद्यते । अनुभूतिजसंस्कारात् स्मृतिज्ञानं प्रजायते इत्यत्र न विवादोस्ति सर्वेषामपि वादिनां । अनुभव-संस्कारस्मृतीनामेकाश्रयता वक्तव्या, तथासति व्यवस्था सुस्थिता भवति, अन्यथान्यत्रानुभवो ऽन्यत्र तत्संस्कारादीत्यभ्युपगमे ऽन्यदृष्टे-प्यन्यस्य स्मृतिप्रसंगः । तथाच क्षणिकविज्ञानात्मवादे ऽनुभवसंस्कार-स्मृतिसमयवर्त्तिन एकस्याभावाद् वैयधिकरण्ये व्यवस्थानुपपत्तिः । संता-नस्यैकत्वात् कथमव्यवस्थेति चेत् । न, संतानस्यावस्तुत्वप्रतिपादनात् । वस्तुत्वेपि प्रवृत्तिविज्ञानजस्य संस्कारस्य चिरनष्टत्वात् ततः स्मृत्यसंभवात् । तत्स्थिरत्वे सर्वे संस्काराः क्षणिका इत्यभ्युगमबाधापत्तेः । नष्टाच्च कार्योत्पत्तेः प्राङ्निरस्तत्वात् । तस्माद् बौद्धमते न व्यवस्था । शून्यवादिमते तु व्यवस्था स्वप्नेपि दुर्लभा, सर्वाभावे सर्वव्यवहारस्यैवो-च्छेदात् । सर्वगतात्मवादिनां मते यद्यपि स्मृतिसंस्कारानुभवानां सामानाधिकरण्यं संभवति तथापि प्रागुक्तदोषानुद्धारात् तेषां मते आत्मनो ज्ञानस्य च विषयसंबन्धाभावात् पूर्वदृष्टार्थाकारस्मृत्युदया-नुपपत्तिः। नहि विषयाकारग्रहणमंतरेण ज्ञानस्य तदाकाराकारित संस्का-रात्मत्वापत्तिः तदभावे च कुतः पूर्वदृष्टाकारसमर्पक स्मृत्युदय इति। येषां मते ध्वंसो ज्ञानस्य निरन्वयस्तेषां संस्कारस्य ज्ञानावस्थाविशेषत्वाभावात्

स्वतन्त्रगुणांतरांगीकारात् तस्य ज्ञानवासनारूपत्वाभावे ततः स्मृत्याख्यं पूर्वज्ञानसदृशं ज्ञानं जायत इति कल्पनं निरुपपत्तिकमेवेत्यलमतिप्रसंगेन। अस्माकं त्वन्तःकरणवृत्तिगतचिदाभासद्वारात्मनः साक्षाद्विषयसंबंधाद्विषयाकाराया वृत्तेः साभासायाः पुनः स्वकारणे साभासान्तःकरणे तत्कारणे साभासाविद्यारूपे च वासनारूपेणावस्थितायाः संस्कारशब्देनाभिलापात् तस्याः पुनरुद्बोधकसमवधाने पूर्वगृहीताकारेणाभिव्यक्त्युपपत्तेरनुभवसंस्कारस्मृतीनामेकविषयतयैकाकारत्वमुपपद्यते। अनुभविता च साभासांतःकरणोपाधिकश्चिदात्मा प्रमाता स एव संस्काराश्रयः स्मर्त्ता च इति सामानाधिकरण्यं चोपपद्यते।

नन्वेवं सति कथं तवमते सुषुप्तिपरामर्शरूपस्मरणस्यानुभावित्राश्रितत्वसिद्धिः, यावता साक्षी तत्रानुभविता, अन्तःकरणगतः प्रमाता च स्मर्त्ता, इति स्मृत्यनुभवयोर्वैयाधिकरण्यादिति चेत्। नायं दोषः। प्रमातुरप्यनुभवितुरवस्थाविशेषत्वात्। सर्वत्रानुभवश्चैतन्यमेव तच्चात्मनः स्वरूपं चिदन्यत्वे चात्मनो जडत्वापत्तेः विरुद्धस्वभावयोर्धर्मधर्मिभावानुपपत्तेश्च। तथाच साक्ष्येव चिदात्मा स्वाध्यस्तसकलानात्मजातस्यानुभविता स च स्वयमवस्थाविशेषरहितोपि स्वाध्यस्तानाद्यनिर्वचनीयाविद्यातत्कार्यान्तःकरणाद्यवस्थाभिरवस्थावानिव लक्ष्यते, यथा सावित्रादिप्रकाशो येषु येषु प्रकाश्येष्वनुगतस्तंतमर्थमवभासयंस्तत्तदाकार एवावभासते वक्रवर्त्तुलदीर्घह्रस्वादिभावेन तथायमपि, न पुनरस्य स्वतः साक्षित्वं वा प्रमातृत्वं वा ऽन्यद्वा किमपि विशेषरूपमुपपद्यते। तथाच प्रविलीन सर्वकार्यावस्थामविद्यांसुषुप्त्यवस्थां स्वाध्यस्तामवभासयन् सुषुप्त्यनुभविता भवति, सा चाविद्या यदा तामवस्थां परित्यज्यान्तःकरणादिकार्याकारा जायते तदा तां तत्कार्यावस्थां प्रकाशयन् तत्रानुगतो

वाह्येन्द्रियद्वारा वाह्यविषयान् प्रकाशयन् प्रमातेत्युच्यते । स एव यदान्तर्वा वहिर्वा प्रागनुभूतावस्थानाशेन तदनुरक्तस्वाभासनाशात् संस्कृतस्तदा तेनैव संस्कारेण कथंचिदुद्बुद्धेन स्वात्मन्यध्यस्तेन पुनः पूर्वनुभूतावस्थाकारे गृह्यमाणे तत्राप्यनुगतस्तमवभासयन् स्मर्त्तेति व्यवहारभाग भवति । एवं सति चिदात्मन्येव सर्वदृश्यावस्थानामध्यासात् नास्मन्मते वैयधिकरण्यशंकास्ति ।

एतदेवाभिप्रेत्य कैश्चिदाचार्यैः सुषुप्तावविद्यावृत्तयः साक्षिणो द्वारमभ्युपगताः । तत्राविद्यैव सुषुप्त्यवस्थापन्ना साक्षिणो दृश्यतामापन्ना ऽविद्यावृत्तिरित्युच्यते न पुनस्तदतिरिक्तास्तद्विषया वृत्तयोन्यास्तत्रापेक्ष्यन्ते अविद्यायाः सुषुप्त्यवस्थाया रजतादिवदन्यावच्छिन्ने चिदात्मन्यध्यासाभावात् स्वात्मन्येव साक्षाद्विषयसंवंधे तदर्थमन्यानपेक्षणात् । नन्वेवं सति कथमहमिति सुखमिति न किंचिदवेदिषमिति चात्मसुखाज्ञानलक्षणार्थत्रयोल्लेख इति चेदुच्यते। आत्मनोवस्थानुभावितुः स्वप्रकाशत्वात् सुखस्य च स्वरूपानन्दरूपस्य स्वप्रकाशत्वात् तयोर्न्न कापि वृत्तिरपेक्ष्यते । नावेदिषमित्यज्ञानं भासमानं स्वप्रकाशसाक्षिण्येव साक्षादध्यस्तमिति न तस्यापि प्रकाशने वृत्त्यंतरापेक्षा । तथाच सुषुप्त्यवस्थापन्नाज्ञानानुगतत्वेनैव सौषुप्तानन्दात्मनः प्रतिभासादज्ञानस्य च स्वानुगतानन्दात्मन्येवावभासादेकीभावेनानुभवे सति विशिष्टाकारसंस्काराद्विशिष्टाकारमेव स्मर्यते सुखमहमस्वाप्सं न किंचिदवेदिषमिति। अत्रास्वाप्समित्येतावदेव सुषुप्तिपरामर्शस्वरूपं तस्यैव व्याख्या सुखमहमिति च न किंचिदवेदिषमिति च व्यपदेशः । एतद्व्युत्पादनायैव वृत्तित्रयाभ्युपगमः प्राचामाचार्याणामिति सर्वं सुस्थितम् ।

( सुखदुःखादिव्यवस्था )

प्रतिशरीरमात्माभेदेपि सुखदुःखादिव्यवस्था भवति ।

मनःशरीराद्युपाधिसंबंधव्यतिरेकेणात्मनि सुखाद्यसंभवादुपाधीनां च व्यवस्थितत्वात्तेषु सुखाद्युत्पत्तिनिमित्तसंसर्गस्यापि देशतः कालतः स्वभावतो वा व्यवस्थितत्वाद्भोगस्यापि तत्र तत्राभिमाननिबंधनत्वादभिमानस्य चाभिमन्यमान तादात्म्याध्यासाधीनत्वादध्यासस्य चाविद्याभ्रांतिसंस्कारायत्तत्वात्सुखाद्यनुसंधानस्याप्यनुभवसमानाश्रयत्वादनुभवस्य च परोपाधिमंतरेणानुपपत्तेरेकात्मवादे नास्त्यव्यवस्था काचिदपीत्युपपन्नमुपादेयं चेदमौपनिषदं दर्शनम् ।

परेषामेव मते व्यवस्था दुःसंपादा । यतः सांख्या वैशेषिकादयश्चात्मनां बहुत्वं व्यापकत्वं चेच्छंति तेषामनुज्ञापरिहारादिव्यवस्था सुखदुःखादिव्यवस्थाच दुर्लभा । तथाहि ।

" एकप्रधानसान्निध्याविशेषात्सकलात्मनां ।
तत्कृतोतिशयः कस्मादविशेषो न जायते ।"

सांख्यानामेकं प्रधानं पुरुषाश्चानंताः सर्वे सर्वगताश्चेतिहि मतं । तत्र यदा प्रधानं यं विशेषं पुरुषान्प्रति दर्शयति तदा स विशेषः सर्वपुरुषसन्निधौ जायमानोनुज्ञापरिहारादिलक्षणो वा सुखदुःखादिलक्षणो वा सर्वेषामविशेषेण युगपदनुष्ठेयो भोग्योवा कस्मान्न जायते । न च पुरुषाणां विक्रियमाणप्रधानसान्निध्ये देशकृतः कालकृतो वा विशेषोस्ति प्रधानपुरुषयोरुभयोरपि व्यापकत्वांगीकारात् । नापि पुरुषाणां प्रधानदर्शनं क्रमेण भवतीति वाच्यं, दृक्शक्तिमतां पुंसां सन्निधिसत्तामात्रातिरेकिणो व्यापारात्मकस्य दर्शनस्यानंगीकारादंगीकारे वा पुंसां विकारित्वप्रसंगः । तस्माद्धेत्वविशेषे फलाविशेष इति न्यायत एव सिद्धे

मोक्षाय वा बंधाय वा भोगाय वा पुंसां प्रधानप्रवृत्तिः सर्वेषां समानैवेति पुरुषाः सर्वे सहैव भुंजीरन्विषयान् सहैव बुध्यादिभि र्बध्येरन्सहैव वा मुच्येरन्निति क्रमानुपपत्ति र्भोगादीनामित्यव्यवस्था स्थितैव। न चादृष्टवैषम्याद्भोगादिषु व्यवस्थेति व ं युक्तं तस्य बुद्धिगतत्वांगीकारात्तस्याश्च व्यापकत्वादेकत्वाच्च युगपत्सर्वपुरुषसान्निध्यात्। अदृष्टानामुद्बोधकवैषम्यात्फलवैषम्यमिति चेत्, न, तदुद्बोधः पुरुषकृतश्चेत्तदा सदाप्रसंगः पुरुषाणां सदा सन्निधानात् व्यापारान्तराभावाच्च। प्रधानकृतत्वेपि स एव दोषः। अदृष्टाप्रयोजकताया वक्ष्यमाणत्वाच्चेति। तस्मात् सांख्यमते न सांकर्यपरिहारः।

वैशेषिकादिमते च न सांकर्यपरिहारः। तथाहि

सर्वेषामात्मनां सर्वमूर्त्तयोगाविशेषतः।
मूर्त्तक्रियाफलप्राप्तिव्यवस्था नोपपद्यते।

सर्वेषां जीवानां सर्वदा सर्वमूर्त्तसंयोगस्य क्वापि विशेषाभावाद्यदा यस्मिन् कस्मिन्नपि मनःशरीरेन्द्रियादौ क्रिया जायते तदा तत्कार्यस्य ज्ञानसुखादेः प्रत्यात्मगतव्यवस्था नोपपद्यते, सामग्रीभेदाभावे कार्यभेदव्यवस्थाया असंभवात्। नह्यत्र सामग्रीभेदो निरूपयितुं शक्यते। प्रत्यात्मं मन आदीनां भेदात्तद्व्यापाराणां च भेदादयौगपद्याच्च न सामग्र्यैक्यं धर्मसांकर्य्यं वा भविष्यतीति चेत्। न, भिन्नेष्वपि मन आदिषु सर्वात्मनां सम्वन्धाविशेषात्। नह्येकस्मिन्नपि मन आदौ व्याप्रियमाणे सर्वेषामात्मनां तत्र सम्वन्धाभावस्तथासति व्यापकत्वाभ्युपगमविरोधात्। एकस्याप्यात्मनो येन मनआदिना सम्वन्धः स संयोगातिरिक्तो न स्वीकृतो वैशेषिकैः

ततः केन विशेषेण धर्मव्यवस्थासिद्धिः। अथ कस्यचिदात्मनः क्वचिद्-भिमानो न सर्वस्य सर्वत्राभिमान इति विशेषः कार्यवशात् कल्प्यत इति चेत्। न, हेतुफलसम्बन्धे ऽभिमानस्याप्रयोजकत्वात्, अनिच्छयापि संस्पृष्टो दहत्येव हि पावक इति न्यायात्। कोऽयमभिमानो नाम, यद्यहंममेति वा ज्ञानं तदा तस्यापि मनःसंयोगजन्यत्वात्तत्संयोगस्य च साधारणत्वादभिमानस्यापि कथं व्यवस्था। अथाभिमानो नामात्मनां कोपि प्रातिस्विको धर्मविशेष इति मतं; तदा स नित्यो ऽनित्यो वा। आद्ये सुषुप्त्याद्यभावो। द्वितीये प्रागुक्तदोषानुषंगः।

अथादृष्टविशेष एव तादृशः प्रत्यात्मसमवेतो यदधीना धर्मव्यवस्थेति। तदप्यसंगतम्। अदृष्टं नाम धर्माधर्मौ तौ च विहितनिषिद्धक्रियाजन्यौ क्रिया च प्रयत्नजन्या प्रयत्नश्चात्ममनःसंयोगजन्य इति हि भवतां मतं। तत्र येनात्ममनःसंयोगेन प्रयत्नो जायते स एव कथं व्यवतिष्ठेत तन्मूलस्य मनःसंयोगस्य व्यवस्थायां हेत्वभावात्। मनःक्रियया हि संयोगः क्रियावन्मनो यत्र पतति तत्र सर्वत्रवात्मानः सन्ति व्यापकानामव्याप्त-देशाभावात् तस्मान्नादृष्टेपि व्यवस्थेति तन्मूलोपि धर्मः संकीर्य्येतैव।

तस्मात् सर्वगतानेकात्मवादिनां व्यवस्थाहेत्वभावादेकस्मिन् सुखिनि सर्वे सुखिनो दुःखिनि वा दुःखिनः स्युरित्यादि यदुद्भाव्यते भेदवादिभि-र्वेदान्तिनं प्रति तदात्मीय एव वाणो भवन्तं प्रहरतीति न्यायविषय-तामापन्नम्। अस्माकं तु सर्वाधिष्ठानतयावस्थितस्यैव चिदात्मनोऽनाद्य-विद्याकल्पितानन्तोपाधिभिः परिच्छिन्नतया तत्तद्वासनापरंपरानुवर्तितया च तत्रतत्राभिमानभेदनिबन्धना सुखदुःखादिव्यवस्था सुस्थैवाभिमान-तत्संस्कारप्रवाहस्यानादित्वाद्यावदविद्यानिवृत्तिस्तावत् सर्वव्यवस्थोपपद्यते।

यथाकाशस्यैकत्वेपि तत्तत् कर्णशष्कुल्यवच्छेदभेदाच्छब्दग्रहणव्यवस्था तद्वदिति। +

किंच प्रतिशरीरमात्मभेदकल्पनापि परेषामप्रामाणिकी सुखदुःखादेर्मनोधर्मत्वप्रतिपादनेन तदीय व्यवस्थान्यथानुपपत्तेर्निराकरणात्, विरुद्धधर्माक्रान्तत्वहेतोश्च श्रोत्रेषु व्यभिचारात्, नहि सकृदुत्पन्नः शब्दः सर्वेषु श्रोत्रेषु समवैत्याकाशात्मनैकत्वेपि। नापि तारादिधर्मविशिष्टशब्दभेदः संकीर्यते। नच प्रत्यक्षमस्त्यात्मभेदग्राहकं, तथासति लोकायतैर्विप्रतिपत्त्यभावप्रसंगात्। यदपि सांख्यानामात्मभेदानुमानः " जननमरणकरणनां प्रतिनियमादयुगपत्प्रवृत्तेश्च पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चेति" तत्र हेतूनामसिद्धत्वान्न तत्साधकं। जननादयो हि क्षेत्रधर्मा नात्मधर्मा इति। एतेन जीवेश्वरयोर्भेदवादोपि प्रत्युक्त एव।

## ( स्वप्नावस्था निरूपणं )

अत्र केषांचिद्विभ्रान्तिरुन्मिषेत् जाग्रत्स्वप्नयोर्विशेषो नोपलभ्यते विषयानुभवस्य तुल्यत्वात्। तददर्शनं हि तद्बाध इष्यते तच्चोभयत्र तुल्यं। तस्माज्जाग्रतः सत्यत्वे स्वप्नोपि सत्य इति। तान् प्रतिबोधयितुमिदमारभ्यते। यथा पूर्वेद्युर्ज्जाग्रत्यनुभूतमद्यजाग्रति संवादगोचरो

---

+ आर्हतमतं सावयवत्वादकाल्पनिकी भोगव्यवस्था तदवयवेषु सम्भवेदित्यत्राह—" शरीरेति।" किमवयवानां चैतन्यमुतावयविनः? आद्ये कदाचिद्विरुद्धाशया अनेकचेतनाधिष्ठितं शरीरं विरुद्धादिक्क्रियं सदुन्मथ्यतेक्रियं वा स्यात्। द्वितीये तु सिद्धा काल्पनिकी व्यवस्था। अवयविन एकत्वेन पादादौ वेदनाव्यवस्थावभासस्य काल्पनिकत्वात्।

( चित्सुखाचार्य कृत ब्रह्मसिद्धिटीका )

जायते न तथा स्वप्नेनुभूतं पुनः स्वप्नान्तरे जागरिते वा संबाध्यमानमुपलभ्यते तथासति स्वप्ने केनचित् तुभ्यमेतावद्धनं मया दास्यते मद्गृहं प्रत्यागच्छेत्युक्ते प्रतिबुद्धेन तस्य गृहं गत्वा स पृष्टः संस्तथेत्यंगीकुर्यात् न तथा व्यवहारो दृश्यते किंतु किमिदं मया दृष्टं मृषैवैतादित्यनुभवः सर्वजनीनः। किंच स्वप्नदृष्टस्य तत्रैव विसंवादोनुभवसिद्धो यतः कदाचित्तत्र गौरित्युपलब्धस्तदैवाश्वोमनुष्योन्यो वा भवन्ननुभूयते। स्वप्नादुत्थाय तत्रदृष्टमनुवदंतोप्यद्राक्षमिव देवायतनमस्प्राक्षमिवानंतनारायणमूर्त्तिमश्रौषमिव तत्र स्तोत्रघोषमित्याभासार्थावद्योतीव शब्दोपेतमेवानुवदंति। तस्मात् स्वप्नदर्शनं मिथ्या। इतोपि तन्मिथ्यात्वमेष्टव्यं यतः स्वप्ने जाग्रद्व्यवहारोचितो देशादिर्नसंभाव्यते। यदि स्वप्नदृक् वहिर्गच्छेत् तदा प्रकृतेनैव शरीरेण गच्छत्यन्येन वा तत्सदृशेन तद्विलक्षणेन वा। नाद्यः शयनदेशे तस्यादर्शनप्रसंगात्। नहि दृढापिहित द्वारापवरकांतराले संविशतः शरीरस्य वहिर्गमनमागमनं वा संभाव्यते। न द्वितीयतृतीयौ, जन्मांतरमंतरेण पूर्वशरीरसदृशस्य वा शरीरांतरस्य परिग्रहायोगात्। तथासति पूर्वशरीरनाशप्रसंगात्तत्र पुनरुत्थानं न स्यात्। तस्मादंतरेव स्वप्नदर्शनं, तत्र च नास्ति रथाद्युचितदेश इति। तथोचितः कालोपि तत्र न संभाव्यते। मुहूर्त्तमात्रं सुप्तेनानेकवासरातिक्रमणानुभवात्। तथोचित वस्त्वपि तत्र न संभाव्यते तक्षदारुशिलाद्यभावेप्यकस्मान्महाप्रासादरथादिनिर्माणस्य तत्रोपलंभात्। तस्माच्चिदात्मन्यध्यस्तत्वाविशेषेपि न जाग्रद्वत्स्वप्नः सत्यव्यवहारास्पदं भवति किन्तु मिथ्येत्येव तत्र व्यवहारः। यद्यपि जाग्रत्स्वप्नयोः स्वकाले वाधितत्वानवभासाद् व्यवहारतुल्यता तथाप्युक्तोपपत्तिवशात् स्वप्नस्य जाग्रद्विल-

क्षणतोपपत्तेः प्रत्यहं बाधोपलब्धेश्च सिद्धं तस्य मिथ्यात्वं । ननु क्वचित् स्वप्नोपलब्धस्य संवादोपि दृश्यते । सत्यं, नैतावता स्वप्नोपलब्धं सत्यं भवति, तथासति उत्तमर्णस्य कस्यचित् स्वप्ने तदीयेनाधमर्णेनागत्य देयप्रत्यर्पणं कृतमिति पश्यतस्ततो देयादानं सत्यमेव भवेत् तथाच पुनस्ततत्सन्निधानगमनेनर्णप्रार्थनायां मया दत्तमित्येव स ब्रूयान्नतु दास्यामीति । तस्मात् क्वाचित्सत्यार्थसूचकत्वेपि स्वप्नस्य न स्वरूपतः सत्यत्वमस्ति । तस्मान्मृषा स्वप्न इति ।

ननु कोयं स्वप्नो नाम । बाह्येन्द्रियाणामुपरमे सति जागरितसंस्कारजः सविषयः प्रत्यय इति ब्रूमः । ननु किमाश्रयः संस्कारः कथं वा तज्जन्यः प्रत्ययः सविषय इति । उच्यते । " अनुभूतिजसंस्कारः सर्वोंतःकरणाश्रयः । मनोयोगं विना ज्ञाने न विशेषो यतः क्वचित् "। सर्वत्र जागरणे वा स्वप्ने वा या अनुभूतयस्तज्जन्याः सर्वे संस्कारा अन्तःकरणसंश्रया यतोऽन्तःकरणसंबंधं विना ज्ञानस्वरूपे स्वप्रकाश-चिन्मात्रस्वभावे प्रत्यगात्मनि क्वापि विशेषो नास्ति स्वतस्तास्मिन् विशेषा-निरूपणात् । तथाच स्वप्नेपि संस्कारा जाग्रदनुभवकृता अन्तःकरण एव वर्त्तन्ते न केवल आत्मनि संभवति तस्य स्वतो ज्ञातृत्वाभावात् । एवंच सति । " तादृङ्मनस्यभिव्यक्तचिदज्ञानविजृम्भिताः। मनोवृत्त्य-वर्हिर्भावात्स्वप्नार्था मानसाः स्मृताः ।" वासनाविशिष्टमनोवृत्यभिव्यक्त-चैतन्याज्ञानविवर्त्ताः स्वाप्नाविषयास्तेषां मनोवृत्तेर्वहिरभावात् मनोरूपत्वं विद्वत्तमैराचार्यैस्तत्रतत्रोच्यते । जागरणे हि पारमैश्वर्ये जगति बाह्येन्द्रिय-द्वारकमनोवृत्तिव्याप्या भौतिका विषया व्यवहाराविसंवादिनो वर्त्तन्ते,

स्वप्ने तु वासनामयलिंगोपाधेस्तैजसस्य वासनामयी सृष्टिः, वासना च मनोगतैव तदा भवति साभासाज्ञानस्यापि तदा लिंगोपादानतयानुवर्त्तमानत्वात् तस्य च सर्वत्र सर्वविकारात्मना स्वाश्रये चिदात्मन्यतात्त्विकान्यथाभावावभासहेतुत्वात् निद्रादिदोषदुष्टादृष्टादिसमुद्बुद्ध वासनामय मनःसाक्षितयानुगते सर्वाधिष्ठाने चिदात्मनि स्थिता ऽविद्यासंक्षुब्धा सती वासनानुरूपविषयात्मना विजृम्भते । अतो ऽविद्यामया अपि विषया मनोमया एव स्वप्ने भवन्ति यथा जागरणेपि शुक्तिरजतादयस्तथैवेति । नहि शुक्तिवत् तदध्यस्तं रजतमपि परमेश्वरमायोद्भूतं येन तस्य मनोमात्रकल्पितत्वं न भवेत् । नहि तद्रजतमिदमाकारमनोवृत्तेरन्यत्रास्ति नापि साक्षान्मनोवृत्तिरेव रजतं तथासति इदमाकारवत् पारमार्थिकत्वापत्तेः । तस्मात् निद्रादिदोषदुष्ट जाग्रद्वासनामयमनःसंप्रयुक्ताधिष्ठानचैतन्यस्थाविद्या शुक्तीदमंशानुगतचैतन्यस्थादिवेव रजताकारा स्वाप्नविषयाकारा जायते, केवलसाक्षिवेद्यताचोभयत्र समानेति व्यावहारिकपदार्थवैलक्षण्यासिद्धिः स्वप्नार्थस्य । अतएवान्तःकरणवृत्तिव्यवधानाभावात् स्वप्नार्थसाक्षिणः स्वाप्नार्थस्येन्द्रियवेद्यत्वशंकापाकृता भवति । स्वप्ने विषयोपलंभ इन्द्रियाणामुपरतत्वात्तन्न तदुपलंभः । तत्र यद्यपि मनो ऽस्त्यनुपरतं तथापि तन्मात्रेण रूपाद्युपलंभासंभवान्न तत्तत्रार्थोपलब्धिकरणतामश्नुते किन्तु प्रतीयमानार्थतदवभासाधिष्ठानचिदात्मव्यञ्जकतया चिदात्मनो विषयविषय्याकारावभासोपाधिमात्रमिति ।

## ( उपसंहारः )

अनुभवस्मृतिभ्यां विषयसंवादविसंवादावभासवशात् प्रमाभ्रमसंशयादिभिश्च तद्वन्तमात्मानं मन्यमानश्चिदात्मा जाग्रदवस्थावानिव भवति, न तु पुनस्तस्य जागरणं साक्षादस्ति । आविर्भावतिरोभाववदखिलविषयतदाकारधीवृत्तीश्चावभासतो ऽखण्डचिदात्मनस्तद्धर्मकत्वासंभवात्, नहि द्रष्टुर्दृश्यधर्मकता युक्ता । तस्मात् सिद्धमस्य स्थूलभोगायतनात् समष्टिव्यष्टिरूपाद्विशुद्धिः ।

जाग्रद्भोगो यथाध्यासं विनात्मनि न वर्तते तथा स्वप्नार्थभोगोपि। जाग्रत्-स्वप्नभोगयोरात्मन्यविद्यामंतरेणासंभवादध्यस्तत्वमविशिष्टमेव तथापि प्रमातृप्रमेयाद्युपलंभेषु सत्सु स्वप्नभोगवज्जाग्रद्भोगस्य वाध्यता नानुभूयन्ते । स्वप्नो हि प्रमात्रादिषु सत्स्वेव वाधितप्रतीतिगोचरो जायते न तथा जागरणमित्यतो लोकस्य व्यवहर्तृप्राणिजातस्य जागरणावस्थायां तद्विषयेषु च सत्यत्वबुद्धिर्न तथा स्वप्न इत्यनयोश्चिदात्मन्यध्यस्तत्वेप्यवांतरभेदस्तथाचात्मा स्वप्नेपि साक्षिमात्रतया तद्गतभोगैरप्यसंसृष्ट इति सिद्धमस्य विशुद्धिः ।

---

# क्रोडपत्रः ।

## ( पृष्ठ १०१ )

सत्यज्ञानानन्तादि शब्दा लोके नात्यन्तमव्युत्पन्ना यतो ऽनृत-विलक्षणं सत्यमिति लोके प्रसिद्धं । रजतमसत्यं शुक्ति सत्येति, सर्पोऽनृतो रज्जुःसत्या जलमनृतं मरीचिका सत्येत्येवं वहुषु प्रयोगेषु वाध्यमनृत-मावाध्यं सत्यमिति सत्यपदमनृतविलक्षणविषये व्युत्पन्नं । तच्च शुक्त्या-दिषु व्यावर्त्तमानेष्वनुवर्तमानं शुक्त्यादिविकाराभिन्नं न शुक्त्यादिरेव, इति सर्वानुस्यूत सन्मात्रमेव सत्यमिति सत्यपदं व्रह्म गमयति । नच सर्वानुस्यूत सच्छब्दवाच्यं सत्तासामान्यमेव, नतु व्रह्मेति वाच्यं । व्रह्मातिरिक्तस्य सामान्यस्यासंभवात् । समत्वं हि सामान्यमुच्यते । तच्च समत्वं कार्येषु कारणस्य दृश्येषु दर्शनस्य च संभवति यथा घटकुड्या-दीनां कारणं मृत्स्वरूपमात्रं सकलघटादिमृन्मयमात्रस्य सामान्यं समत्वात् । नहि मृत्तद्विकारस्वरूपातिरिक्तं तदनुगतं मृत्त्वं घटत्वादि वा प्रमाणपथमवतरति; तत् किं मृदादिभ्योन्यदनन्यद्वा? आद्ये गवाश्व-योरिव सामान्यविशेषभावानुपपत्तिः । द्वितीये धर्मधर्मिभावासिद्धिः । अन्यानन्यत्वं च विरुद्धं । तथाच यस्य यत्स्वरूपं तदेव तस्य सामान्यं, मृदाद्येतद्घटादेः स्वरूपमिति तदेव तत्सामान्यं, एवं व्रह्मविवर्त्तत्वात् सर्वस्य, व्रह्मैव सर्वस्य सामान्यं । तद्यदा सर्वसाधारण्येन व्यवह्रियते तदा सत्तेत्युच्यते, यदा पुन विंकारविशेषानुगत तत्तदात्मना व्यवह्रियते तदा द्रव्यत्वपृथिवीत्वघटत्वपटत्वादिशब्दवाच्यं भवति । अतः सर्वानुस्यूत सन्मात्र वह्मैवावाध्यं सत्यं वाचारम्भणानृतजगाद्विलक्षणमिति सदिति सत्यमिति च पदं व्रह्माणि व्युत्पन्नम् ।

तथा ज्ञानपदं ज्ञेयाकारायां बुद्धिवृत्तौ लोके व्युत्पन्नं, स्तम्भज्ञानं कुम्भज्ञानमिति स्तम्भं जानामि कुम्भं जानामीति च सर्वलोकव्यवहारदर्शनात् । तत्र स्तम्भादयो भासमाना जानातिक्रियाकर्मत्वेनैव भासन्ते न स्वतः, अन्यथा सदैव भासेरन् नवा कदाचित् इति प्रसज्येत । कदाचित् भासमानास्तु ते जडा एवेति निश्चीयते । तथाच स्तम्भादिषु व्यावर्त्तमानेषु ज्ञानमात्राकारस्याव्यावृत्तेः न ज्ञानस्य स्वतो भेदोस्ति, भेदस्य विषयोपाधिपरामर्शमन्तरेणानवभासात् । तस्मादेकमेवज्ञानं सर्वावभासकं तच्च सर्वाधिष्ठानसन्मात्रान्नातिरिच्यते ।

ननु ज्ञानस्योत्पत्तिविनाशयोरनुभवसिद्धत्वात् कथमेकत्वं सर्वभास्यानुस्यूतत्वं वेति चेत्, तत्तद्विषयाकारबुद्धिवृत्त्युपाधिवशादुत्पत्त्याद्यनुभव इति वदामः । तथाहि सुषुप्तौ तावद्विषयावभासो नास्तीत्यविवादं; तत्र तदभावः किं विषयाभावात्, विद्यमानेपि विषये ज्ञानोदयाभावाद्वा, तत्र सत्त्वेपि ज्ञानस्य विषयसंबंधाभावाद्वेति विवेचनीयं । मतान्तरदृष्ट्यातु तदा विद्यन्त एव विषयास्तत्संबंधश्च आत्मनो व्यापकत्वात् तदास्त्येव, तथापि नावभासन्ते, तस्मान्नाद्यो ऽनवद्यः । अथ तद्विषयज्ञानोदयाभावाद्विषयानवभास इति द्वितीये पक्षे कथं ज्ञानोदयाभावो, मनसो विद्यमानत्वात् । मनोपि तदा विलीनमिति चेन्न तस्य नित्यत्वाभ्युपगमात्; नित्यत्वेपि निर्व्यापारं तदा मन इति चेत्, तर्ह्यायातं मनोव्यापारनिमित्तमेवात्मनो विषयज्ञानमिति । स च मनोव्यापारः किमात्मसंयोगः किंवेन्द्रियसंयोगो ऽथवा विषयसंयोगः । नाद्यः, तस्य सदातनत्वेन सदा ज्ञानोदयप्रसंगात् । न द्वितीयः, त्वगिन्द्रियसंयोगस्य तदा सत्त्वेपि ज्ञानोदयादर्शनात् । त्वगिन्द्रियस्य संपूर्णशरीरव्यापित्वात् तदवच्छिन्नात्मनि विद्यमानस्य मनसस्तत्संयोगावश्यंभावात् । न तृतीयो ऽणुमात्रस्य मनसो देहाद्बहिर्विषयसंगत्ययोगात् । अथात्मसंयुक्तस्य

मनसो विषयसंयुक्तेन्द्रियसंयोगो ज्ञानहेतुरित्युच्येत, तदपि न, सुषुप्तौ शयानस्य मनसः शय्यादिभिर्विषयैः संयुक्तत्वक्सम्वन्धे सत्यपि तदा ज्ञानानुदयात्। तस्मात् संयोगमात्रं न मनसो व्यापारो यदभावात् तदा ज्ञानानुदयः कल्प्येत। निरवयवाणुपरिमाणमनःपक्षे तस्यान्यसंयोगोपि दुर्भण एव, संयोगस्यैकदेशवृत्तित्वान्निरवयवस्य प्रदेशाभावात्। अन्योपाधिकृतः प्रदेश इति चेन्न तस्यान्यसंयोगाधीनत्वात् परस्पराश्रयापत्तेः। किंच मनसः प्रदेश आत्मकृतो वा इन्द्रियकृतो वा देहकृतो वा स्यात्, सर्वथापि नोपपद्यते, आत्मादीनां महत्वादण्वेकदेशोपाधित्वानुपपत्तेरपरिच्छिन्नं हि परिच्छिन्नेनावच्छिद्यते न परिच्छिन्नमपरिच्छिन्नेन तत्रोदाहरणाभावात्। अथ शरीराद्येकदेशेनैव मनोदेशः परिच्छिद्यत इत्युच्येत तत्रापि शरीरादिपरमाणुमात्रदेशस्य समपरिमाणत्वात् तत्कृतैकदेशासिद्धेः ततोधिकपरिमाणस्यावच्छेदकत्वे पूर्वोक्तदूषणानतिवृत्तेः। अत औपाधिकस्यापि प्रदेशस्यासंभवान्न मनसः संयोगः। व्याप्यवृत्तिसंयोगपक्षे तु संवन्धिनोरुभयोः समानपरिमाणत्वप्रसंगः। एतेनात्मनोपि मन आदिभिः संयोगो व्याख्यातः। भवतु वा संयोगो यादृशतादृशस्तथापीदमुच्यतां, किमात्मनो ऽग्नेरौष्ण्यवज्ज्ञानं स्वभावः किंवा ऽयःपिण्डस्यौष्ण्यवदन्यसम्वन्धनिमित्तमिति। आद्ये ज्ञानस्यात्मस्वरूपत्वात् तस्य च नित्यत्वान्नोदयापेक्षा यत्र मनःसंयोगो हेतुत्वेनापेक्ष्येत। द्वितीयेत्वात्ममनसोर्द्वयोरपि द्रव्यमात्रत्वेनाचेतनत्वाविशेषात् लोष्टयोः संयोग इव ज्ञानगुणोदयासिद्धिः। अपिच ज्ञानस्य प्रकाशगुणत्वात् तस्य च स्वाश्रयद्रव्यजन्मव्यतिरेकेण स्वद्रव्योपाधौ प्रदीपप्रकाशवज्जन्मासंभवः। अपिच मनःसंयोगस्यासमवायिकारणत्वांगीकारात् तस्यचाणुमात्रदेशनिष्ठत्वादसमवायिकारणदेशात् कार्यस्याधिकदेशवृत्त्यदर्शनाच्छब्दस्यापि विवादास्पदत्वादात्मन्युत्पन्नमपि ज्ञानमणुमात्रमेव भासयेन्न कृत्स्नं विषयाकारं।

प्रकाशव्याप्तिमन्तरेण प्रकाश्यानां प्रकाशव्यवहारासंभवाद्देहावच्छिन्न आत्मनि उत्पन्नमपि ज्ञानं विषयासंबंधे न तत्र प्रकाशव्यवहारसाधनं, विषयसम्बन्धश्चामूर्त्तस्य ज्ञानस्य बहिर्गमनासंभवादेवासंभवी ।

तदेवमुक्तविधया पक्षद्वयासंभवे सति तृतीयःपक्षः परिशिष्यते तथाच सुषुप्तौ विद्यमानमेव ज्ञानं व्यवहारदृष्ट्या विद्यमानेनापि विषयेण संबंधयितुरभावान्न विषयव्यवहारक्षममित्यभ्युपेयम् । सुषुप्तौ ज्ञानसद्भावः पूर्वं प्रसाधितः । जन्यज्ञानाभावेप्यात्मस्वरुपभूतस्य ज्ञानस्य सद्भावादन्यथा सुप्तेरसाक्षिकत्वादवस्थान्तरे तत्परामर्शाभावप्रसंगात् । आत्मनश्च ज्ञानरूपत्वाभावे तस्मिन्नज्ञानसंशयविपर्ययाणां कदाचिदवभासो भवेत् । नहि कश्चिदेतावन्तंकालं नाभूवमहमस्मि वा नास्मि वा नास्म्येवेति वा ऽत्मन्यज्ञानाद्यनुभवति । तस्माज्ज्ञानरूप एवात्मेति सुषुप्तौ विद्यमानस्यैव ज्ञानस्य विषयसंबंधाभावात् तदनवभासकत्वम् ।

ननु यदि ज्ञानस्वरूप एवात्मा तर्हि तस्य व्यापकत्वात् सर्वार्थसम्बन्धः स्वत एव सिद्ध इति सदैवार्थं प्रकाशयेत् किमिति विषयसम्बन्धायान्यदपेक्षत इति चेत् । सत्यं, तथापि विशेषाकारस्फुरणस्याभिव्यञ्जकविशेषमन्तरेणानुपपत्तेः । यथा दारुदृषदोर्विद्यमानोपि पावको न दार्वादि दहति प्रकाशयति वा किन्तु तत्र मथनाद्युपायेनाभिव्यक्तस्तथात्मापि सर्वाधिष्ठानतया सर्वसंगतोपि निर्विशेष एव तिष्ठत्यतस्तस्य तत्र तत्र विशेषाभिव्यक्तेः साधनान्तरायत्तत्वात् तत्साधनमपेक्षते । किं तत्र साधनमित्यपेक्षायामन्तःकरणवृत्तिरेवेत्यलं प्रसंगगतचिन्तया ।

अन्तःकरणं चात्मन्यध्याससिद्धमिति सिद्धान्तः । तच्च न निरवयवं नाप्यणुपरिमाणं नापि व्यापकं किन्तु मध्यमपरिमाणं तदेवाग्नेरिवायःपिण्डादिरात्मनो विशेषाकाराभिव्यक्तिसाधनं तस्मिन् सत्येव जाग्रदादौ विशेषाकारावभासनात् तदभावे सुषुप्तौ तदनवभासात् । अन्तःकरणपरिणामश्च वृत्तिरित्युच्यते सा च चक्षुरादिद्वारा दीर्घप्रभावत् तत्सम्बद्धं

विषयं प्राप्य विषयाकारमवतिष्ठते यदा तदा तत्रात्मचैतन्यमपि तदाकारेणावभासमानं विषयानुभवसंज्ञां प्राप्नोति, तत्र वृत्तीनां प्रतिविषयमुत्पत्तिविनाशवत्वात् तदुपरक्ततया चिदात्मरूपमपि ज्ञानमुत्पत्तिविनाशवत्तया ऽविवेकादवभासते न स्वत इत्युत्पत्तिविनाशप्रतीतेर्भेदप्रतीतेश्चान्यथैवोपपत्तेः, सर्वविषयावभासकमेकं नित्यं चात्मरूपं ज्ञानमिति सिद्धं। तथाच जानाति क्रियाशब्दित साभासान्तःकरणवृत्तौ लोके ज्ञानशब्दव्युत्पत्तेस्तस्याश्चोक्तरीत्या स्वरूपज्ञाने पर्यवसानात् व्युत्पन्न एव ज्ञानशब्दोपि ज्ञानं ब्रह्मेति बोधयितुं क्षमते।

तथानंतशब्दोपि प्रसिद्धार्थ एव तस्यांतवत्वनिषेधमात्रपरत्वात्। अन्तशब्दस्य च परिच्छेदवाचित्वेन लोके प्रसिद्धत्वात्। यथा परपरिकल्पित परमाण्वादे र्लोकसिद्धस्य पर्वतादेर्वा देशतः परिच्छेदो, न तथा ब्रह्मणः परिच्छेदो, यथा वा लोकवादिसिद्धस्य घटादेः पृथिव्यादेर्वा कालतः परिच्छदो न तथा ब्रह्मणः। यथा वा आकाशादेर्वस्तुनो वस्त्वन्तरात् भेदरूपः परिच्छेदो न तथा ब्रह्मणः, कालदेशवस्तूनां कारणत्वाद् ब्रह्मणः, कार्येण च कारणस्य परिच्छेदासंभवात्। तथाहि कालादिकार्योत्पत्तेः प्राक् कारणत्वेन, कार्यनाशे च तदवधित्वेन, कार्यावस्थाने तदाधारत्वेन च स्थितस्य ब्रह्मणः कालपरिच्छेदस्तावन्नास्ति। *

---

* आदित्यपरिवर्त्तनोपाधिभेदैर्भिद्यमानेषु निमेषादिषु संवत्सरान्तेषु यत्कालैकशब्दवाच्यमभिद्यमानमनुस्यूतमवगम्यते तत् सर्वाधिष्ठानतया सर्वव्यवहारास्पदात् परस्मादात्मनो ब्रह्मणोऽन्यत्तत्त्वान्तरं न संभवति। तदन्यस्य तादृशस्यानिरूपणात्। निमेषादयो हि सत्तास्फुरणाभ्यां व्याप्ता एवावगम्यन्ते सत्तास्फुरणं ब्रह्मरूप एवेत्युपपादितं। तस्मादखण्डसत्तास्फुरणरूपे ब्रह्मण्यादित्यगतिभेदोपाधिभिन्निमेषादिभिरवाच्छिद्यमानेऽखण्डकालात्मत्वमध्यारोप्यते न तु ततोऽतिरिक्तताहक्

कालसद्भावे प्रमाणमस्ति। अन्यस्य सर्वस्य तस्मिन् ब्रह्मणि कल्पितत्वेन मृषात्वोपपादनात्। तस्मान्निमेषाद्यवयवैर्यत्तेष्वनुस्यूतमनुमीयेत तद् ब्रह्मैव सिध्यति न ततोऽन्यः कालो नामेत्यस्मिन् पक्षे न पदार्थान्तरं कालः। यदा निमेषादयो लोकप्रसिद्धा एव कालस्तदा सिद्धमेव तेषां कार्यत्वमनेकत्वं च। तेषु कालैकशब्दप्रयोगः स्वोपरक्तानां वस्तूनां परिकलनात्मकत्वात्। कलनात् काल इति व्युत्पत्तेः, कलनं च गणनं, नहि गण्यमानवस्तूपरागमन्तरेण कश्चित् गणनहेतुर्भवति। गणनं च कालः, पाक्षिकोऽयं मासिक आयानिकः सांवत्सरिकोऽयमिति कालेनैव सर्वेषां गण्यमानत्वात्। तस्मात् कालेन वस्तूनि परिच्छिद्यन्ते वस्तुक्रियया च काल इत्यन्योन्यसापेक्षत्वादद: पूर्वमासीदिदमिदानीमस्त्यदोऽग्रे भविष्यतीति व्यवहारे मिथःसंबंधनियमदर्शनादतो वस्तुक्रियाभिः सह काला अपि निमेषादिशब्दवाच्या ब्रह्मणि कल्पिता न परमार्थः कश्चित् कालो नामास्ति दूरे तस्यैकत्वं नित्यत्वं चेति। तस्मात् परमार्थतः परमात्मनोऽन्यः कालो नाम न पदार्थोऽस्ति किन्तु परमात्मैव परोपाधिविशेषैर्विशेष्यमाणो लवनिमेषकाष्ठात्रुटिकलाघटिकामुहूर्त्तादिक्रमेण संवत्सरपर्यन्त शब्दवाच्यतया कालव्यवहाराश्रय इति सिद्धम्।

दिगप्येका स्वतन्त्रेति न प्रमाणपदवीमुपारोहति। सर्वेषु प्राच्यादिव्यवहारास्पदेषु नभसोऽनुगमात् तेनैवैकत्वव्यपदेशस्योपपत्तेः।

आकाशोऽहि व्यापकत्वेनाभिमतोऽनाकाशस्य देशस्य वस्तुनो वा चिदात्मातिरिक्तस्याभावात् तस्मिन् सूर्योदयदर्शनालंबननिबन्धनप्राचीदिग्व्यवहारोपपत्तेस्तदनुसारेण दशापिदिश आकाश एव कल्प्यन्ते। अत आकाशेनैव दिगेकत्वव्यवहारस्य सिद्धिर्न्न तदतिरिक्तो दिक्पदार्थोऽस्ति। तस्मादाकाशमात्रातिरेके प्रमाणाभावान्न दिगाख्यो नित्यः स्वतन्त्रः पदार्थोऽस्तीति सिद्धम्।

अत्राकाशादिसकलभावानां विप्रतिपन्नानां विकारत्वसाधनमनुमानं प्रयुज्यते। विमता आकाशादयः सर्वे विकारा विभक्तत्वात् घटपटादिवत्। विभक्तत्वं चान्योन्याभावप्रतियोगित्वं तच्चास्त्याकाशादौ। यत्रैतदस्ति तत्र विकारत्वेन व्याप्तमेवास्ति नाव्याप्तं। न चात्मनि व्याभिचारः, तस्मिन् हेत्ववृत्तेः। तस्य हि सर्वविकारोपादनत्वेन

अतएव देशपरिच्छदो वस्तुपरिच्छेदश्च नास्ति कारणादन्यत्र कार्यसत्वानुपपत्तेः स्वरूपभेदानुपपत्तेश्च । तस्मादनन्तं ब्रह्मेत्यनन्तशब्दोऽपि ब्रह्म बोधयितुं क्षमते ।

सत्यज्ञानानंतं ब्रह्मेत्यादीनि ब्रह्मलक्षणपदान्यखण्डार्थपराण्येव । तथाहि। सत्यमिति स्वरूपतो गुणतोवयवतो वा यदनागमापायि तदुच्यते। दृश्यंते हि स्वरूपत एवागमापायवत्पटकुंडलादिकं कार्यं गुणतश्चापाकनिक्षिप्तो घटादिः श्येनादिवियुक्तो वा स्थाण्वादिरवयवतश्च कुड्यस्तंभादिः, न तथा ब्रह्म, इति विकारवतो द्रव्याद् व्यावृत्तये सत्यपदं । सत्यं ब्रह्म न कदापि कथमपि विकारवदित्यर्थः। तर्हिं किमाकाशं तमो वा तज्जडं, नेत्याह ज्ञानमिति। ज्ञानमित्यवबोधः प्रकाशमात्रं सर्वविषयस्फुरणेषु विषयाकारव्यावृत्तावप्यव्यावृत्तमनागमापाय्युदयास्तमनरहितं वस्तु कथ्यते। तेनाप्रकाशमानात्तमआकाशादेरनित्यप्रकाशात्मकाद्बुद्धिवृत्त्याद्युपहितचिदाभासादेरुदयास्तमयव्यवहारास्पदादादित्यादेश्च प्रपंचात् ब्रह्म व्यावर्त्तितं भवति। तथाऽनंतमित्यंतवद्व्यावृत्तं वस्तूच्यते। अन्तवत्वं च त्रिविधं देशतः कालतो वस्तुतश्च । तत्राद्यो यथा वैशेषिकाणां परमाणवो देशतः परिच्छिन्ना यथावा लौकिकानां पर्वतादयः कालतश्च यथा घटादयो देशतश्च ते । यथा वस्तुतः परिच्छिन्नाः सर्वं एव जडा न तथा ब्रह्म परिच्छिन्नमित्यनंतं ब्रह्मेत्युच्यते । एतैः पदैः प्रकाशाप्रकाशपरिच्छिन्नात्मकाखिलप्रपंचवैलक्षण्यं ब्रह्मणः स्वरूपं लक्षितम्। एकस्यैव ब्रह्मप्रातिपदिकार्थस्य सत्यादिपदैरनृतादिप्रपंचव्यावृत्तिद्वारा लक्ष्यमाणत्वान्निर्विशेषाखंडैकरसवस्तुन्येव तानि पर्यवस्यन्ति ।

---

सर्वाविभक्तत्वात् । सत्तास्फुरणे ह्यात्मनः स्वरूपं तेच सर्वपदार्थेष्वविभक्तेः परोपाधिपरामर्शमन्तरेण तद्भेदानिरूपणात् । तस्मात् सिद्धमाकाशादिपदार्थानां कार्यत्वम् ।